श्रीमत्सदानन्दयतिप्रणीतः

# वेदान्तसारः

## सारबोधिनीटीकासहितः



टीकाकारः—

पं० छज्जूराम शास्त्री–विद्यासागरः ।





श्रीमत्सदानन्दयति प्रणीतः

# वेदान्तसारः

## सारबोधिनीटीकासहितः ।

टीकाकारः

पं० छज्जूरामशास्त्री विद्यासागरः ।

प्रकाशकः

भार्गव पुस्तकालय, गायघाट, बनारस ।

प्रथमसंस्करणम्] सन् १९४० [मूल्य ।=)

# प्राक्कथनम्

अपि दर्शनाशास्त्ररसिका अध्यापका अध्येतारश्च। नेदमविदितं कस्यापि विदुषः। यद्वेदान्तशास्त्रस्य अद्वैतप्रतिपादनपरेषु—खण्डखण्डन न्यायमकरन्द अद्वैतसिद्धिचित्सुखीप्रभृतिषु महत्सु ग्रन्थेषु सत्स्वपि श्रीमतः सदानन्दस्यायं वेदान्तसारग्रन्थः सर्वत्र भूमण्डले सर्वेषु तेषु मूर्धाभिषिक्तो वर्तते। तत्र च कारणमल्पत्वे सत्यनल्पार्थप्रतिपादकत्वम्। प्रतिपादनशैल्या अतीव सरलत्वं हृदयङ्गमत्वं च। अस्योपरि यद्यपि बहुयः टीका वर्तन्ते तथापि ताः छात्रैर्न सुबोधा नैव च सर्वार्थदर्शिन्यः। यद्यनया मम टीकया छात्राणां कश्चिदप्युपकारो भवेत्तदा स्वकीयं परिश्रमं सफलं मंस्ये। एतस्याः टीकायाः प्रकाशने मत्प्रियसुहृदो न्यायव्याकरणदर्शनाचार्य श्रीगुरुप्रसादशास्त्रिणो मम सहायका अतस्तेषां धन्यवादं करोमि।

विद्वत्कृपाकाङ्क्षी—

छज्जूरामशास्त्री।

# वेदान्तसारस्य विषयानुक्रमणिका ।



# अथ वेदान्तसारः ।

## सारबोधिनीसहितः ।

अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥ १ ॥

श्रीगणेशं नमस्कृत्य मामकीनाम मातरम् ।
पितरं मोक्षरामाह्वं मूलचन्द्रं च सोदरम् ॥ १ ॥
कुरुक्षेत्र–मध्यवर्ति–रिटोलीग्रामवासिना ।
गौडपण्डितवर्येण छज्जूरामेण शास्त्रिणा ॥ २ ॥
सुशील-सोमदत्ताख्य-पुत्रयोः पाठनेच्छया ।
वेदान्तसारटीकेयं क्रियते सारबोधिनी ॥ ३ ॥

"मङ्गलाचरणं शिष्टाचारात्फलदर्शनाच्छ्रुतितश्चेति सांख्यदर्शनात्प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्तये ग्रन्थकारो मङ्गलमाचरति–अखण्डमित्यादिना प्रथमपद्येन । अभीष्टस्य=निःश्रेयसस्य, सिद्धये=प्राप्तये, अहम्, आप्नोतीत्यात्मा तम्=आत्मानमाश्रये=ब्रह्मत्वेन प्रतिपद्य इत्यन्वयः । "बृहत्त्वाद्बृंहणत्वाच्चात्मैव ब्रह्मेतिगीयत" इति भामत्यामुक्तेः । कीदृशमित्याकाङ्क्षायामात्मनश्चत्वारि विशेषणान्याह–अखण्डमित्यादीनि । अखण्डम्=सजातीयविजातीयस्वगतभेदशून्यमित्यर्थः । 'इदं सर्वं यदयमात्मा इति श्रुतेः, सर्वात्मकत्वादिति भावः । "नेति नेतीत्यादिना ब्रह्मणि प्रपञ्चाभावोपपादनेनाखण्डत्वं

( १ ) अयं ग्रामो "जीन्द" नगरादीशानकोणे द्वादश कोशोपरि "धुरुखेड़ा" इष्टेशनात् कोशद्वयोपरि वर्तते ।

अर्थतोऽप्यद्वयानन्दानतीतद्वैतभानतः ।
गुरूनाराध्य वेदान्तसारं वक्ष्ये यथामति ॥ २ ॥

वेदान्तो नामोपनिषत्प्रमाणं, तदुपकारीणि=शारीरकसूत्रादीनि च । अस्य वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धैस्तद्वत्तासि-

---

सिध्यतीति वेदान्तपरिभाषाकारः । सच्चिदानन्दम्=सच्चिदानन्दस्वरूपमित्यर्थः । अवाङ्मनसगोचरम्=नैव वाचा न मनसा नापि चक्षुषा ज्ञातुं शक्यमित्यर्थः । 'अस्तीत्येवोपलब्धव्य इति काठकश्रुतेः । "यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह" इत्यादिश्रुत्या वागाद्यविषयत्वप्रतिपादनाच्चेति सुबोधिनीकाराः । "चकितमभिधत्ते श्रुतिरपी"त्युक्तेरिति कुरुक्षेत्रीयाः । अखिलाधारम्=अखिलस्य कार्यजातस्याधारमधिष्ठानम्, यद्वा "यतो वा इमानि भूतानि जायन्ते" "जन्माद्यस्य यतः, इत्यादिश्रुतिसूत्रभाष्यादिभिर्जगदुत्पत्तिस्थितिलयकारणमित्यर्थः । तच्च ब्रह्मेत्युक्तं भवति । कारणत्वं च कर्तृत्वम् । ननु जन्मादिप्रपञ्चनिष्ठमतो नेदं ब्रह्मलक्षणं युक्तं व्यधिकरणत्वादिति चेन्न, जन्मादेरन्यनिष्ठत्वेऽपि तत्कारणत्वस्य ब्रह्मणि कल्पितत्वात् ॥ १ ॥

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इत्यादि श्रुत्या ग्रन्थकारो गुरुनमस्कारस्यापि शास्त्राङ्गत्वमनुसंधाय द्वितीयपद्येन गुर्वाराधनपूर्वकं स्वचिकीर्षितमाह—अर्थतोऽपीति । अतीतद्वैतभानतः=सार्वविभक्तिकस्तसिः । अतीतं द्वैतभानं येभ्यस्तान्, न केवलं डित्थादिवन्नामत एव किन्त्वर्थतोऽप्यद्वयानन्दान्=अद्वैतानन्दनामकान्गुरूनाराध्य=ध्यात्वा सादरमभिवाद्य वा । 'नभः पतन्त्यात्मसमं पतत्त्रिण' इति न्यायात्, यथामति=स्वमत्यनुसारं, वेदान्तसारंनाम यथार्थनामकं ग्रन्थं वक्ष्ये=प्रतिपादयिष्य इत्यन्वयः । वेदान्तपरिभाषाकारेणापि—"यदन्तेवासिपञ्चास्यैर्निरस्ताभेदिवारणाः । भेदधिक्कारकर्तृंस्तान् श्रीनृसिंहयतीन् भजे ॥ इति पद्येन सदानन्दवत् स्वगुरोः स्वस्य चाद्वैतवादित्वं सूचितम् ॥ २ ॥

सम्प्रति—प्रतिज्ञागतं वेदान्तपदं व्याचष्टे—वेदान्तो नामेति । उपनिषत्प्र-

र्द्धेनं ते पृथगालोचनीयाः। तत्रानुबन्धो नाम। अधिकारिविषय-सम्बन्धप्रयोजनानि ॥ ३ ॥

अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जन-

---

माणम्=उपनिषदो यत्र प्रमाणम्, तथा च श्वेताश्वतरे श्रूयते—'तिलेषु तैलवद्' वेदे वेदान्तः सुप्रतिष्ठित इति॥ तदुपकारीणि=वेदान्तवाक्यसंग्राहकाणीति सुबोधिनीकारः। आपदेवस्तु—तदनुसारीणीति पठित्वा उपनिषदनुसारीणीत्यर्थमाह। यत्तु—उपनिषत्प्रमाणशब्दस्यात्मज्ञानमर्थस्तदुपकारीणि शारीरकसूत्रादीनि="अथातो ब्रह्मजिज्ञासेत्यादीनीत्यर्थं रोचयामहे। आदिशब्दोभाष्यादिसङ्ग्रहार्थः। अस्य=वेदान्तसारग्रन्थस्य, वेदान्तप्रकरणत्वात्=वेदान्तशास्त्रस्य प्रकरणग्रन्थत्वात्, तदीयैः=वेदान्तीयैरेव, अनुबन्धैः=विषयसम्बन्धप्रयोजनाधिकारिभिः, तद्वत्तासिद्धेः=अनुबन्धवत्तासिद्धेः, ते=अनुबन्धाः, पृथक्=स्वातन्त्र्येण, नालोचनीयाः=न प्रतिपादनीया इत्यर्थः। अनुबन्धविषये भट्टपादैरप्युक्तम्—"विना विषयसम्बन्धौ तथैवार्थाधिकारिणौ। अव्याख्येयो भवेद्ग्रन्थः स्याद् ग्रन्थे तच्चतुष्टयम्॥ अनुबन्धत्वं च ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वम्। तत्र=वेदान्तशास्त्रे नामेति प्रसिद्धौ॥ ३॥

अधिकारी तु प्रमातेति सम्बन्धः। स च सदाचारयुक्तो ब्राह्मणादिरेव, न तु स्त्रीशूद्रादिः तस्य श्रुतिस्मृतिसूत्रभाष्यकारैर्निराकृतत्वात्। विधिवत्=विध्युक्तप्रकारेण, प्रकारो ब्रह्मचर्यादिरित्यापदेवः। अधीतवेदवेदाङ्गत्वेन=अधीतो वेदः=मन्त्रब्राह्मणात्मकः शब्दराशिः। तथा चापस्तम्बः—"मन्त्रब्राह्मणयोर्वेदनामधेयमिति। वेदाङ्गानि च—शिक्षा, कल्प, व्याकरण, छन्दो, ज्योतिर्निरुक्ताख्यानि येन स तस्य भावस्तत्त्वं तेनेत्यर्थः। आपाततः=इदमित्थमेवेत्यवधारणं। विनैव, अधिगताखिलवेदार्थः=अधिगतः=सम्यज्ज्ञातोऽखिलवेदार्थो येनसः, वेदार्थशब्दोवेदान्तार्थपरोबोध्यः प्रकृतसङ्गतेः। काम्यनिषिद्ध वर्जनपुरः सरमिति। "मोक्षार्थीनप्रवर्तेत तत्र काम्य निषिद्धयोरित्यभियुक्तवच-

पुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसम्पन्नः प्रमाता। काम्यानि=स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि। निषिद्धानि=नरकाद्यनिष्टसाधनानि ब्राह्मणहननादीनि। नित्यान्यकरणे प्रत्यवायसाधनानि सन्ध्यावन्दनादीनि। नैमित्तिकानि=पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि। प्रायश्चित्तानि=पापक्षयसाधनानि चान्द्रायणादीनि। उपासनानि=सगुणब्रह्मविषयमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि। एतेषां नित्यादीनां बुद्धिशुद्धिः परं प्रयोजनमुपासनानां तु चित्तैकाग्र्यं "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" इत्यादिश्रुतेः। "तपसा कल्मषं हन्ति" इत्यादिस्मृतेश्च। नित्यनैमित्तिकप्रायश्चित्तोपासनानां त्ववान्तरफलं पितृलोकसत्यलोकप्राप्तिः। "कर्मणा पितृलोको विद्यया देवलोक" इत्यादिश्रुतेः। साधनानि=नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमादिषट्कसम्पत्तिमुमुक्षुत्वानि। नित्यानित्यवस्तुविवेकस्तावद्ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम्। ऐहिकानां स्रक्चन्दनवनितादिविषयभोगानां कर्मजन्यतयानित्यत्ववदामुष्मिकाणामप्यमृतादिवि॰यभोगानामनित्यतया

---

नादिति भावः। नित्यनैमित्तिकेति। नित्यानि च नैमित्तिकानि च प्रायश्चित्तानि चोपासनानि च तेषामनुष्ठानं=विधानं, तेनेत्यर्थः। निर्गतनिखिलकल्मषतया=निरस्तसमस्तकल्मषत्वेन, नितान्तनिर्मलस्वान्तः=सर्वथापवित्रान्तःकरणः, यदुक्तं महात्मभिः—"यद्यात्मामलिनोऽस्वच्छो विकारीस्यात्स्वभावतः। न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि॥ साधनचतुष्टयसम्पन्नः=वक्ष्यमाणसाधनचतुष्टयविशिष्टः, तत्र काम्यानि=फलोद्देशेन विधीयमानानि कर्माणि, स्वर्गादीत्यादिपदेन पुत्रादिसंग्रहः। स्वर्गलक्षणन्तु—"यन्नदुःखेनसंभिन्नमित्यादि

तेभ्यो नितरां विरतिरिहामुत्रार्थफलभोगविरागः। शमादयस्तु शमदमोपरतितितिक्षासमाधानश्रद्धाख्याः। शमस्तावच्छ्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः। दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्त्तनम्। निवर्त्तितानामेतेषां तद्व्यतिरिक्तविषयेभ्यउपरमणमुपरतिः। अथवाविहितानां कर्मणां विधिना परित्यागः। तितिक्षा=शीतोष्णादिद्वन्द्वसहिष्णुता। निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः=समाधानम्। गुरूपदिष्टवेदान्तवाक्येषु विश्वासः=श्रद्धा। मुमु-

---

सांख्यतत्त्वकौमुद्यामुक्तं बोध्यम्। "स स्वर्गः सर्वान्प्रत्यविशिष्टत्वादिति पूर्वमीमांसायां जैमिन्युक्तं वा। ज्योतिष्टोमादीनि="स्वर्गकामोज्योतिष्टोमेन यजेत" इति श्रुत्युक्तानीत्यर्थः। आदिना दर्शपौर्णमासादिपरिग्रहः। निषिद्धानि वेदनिषिद्धानि,नरकादीति। नरकं न्यरकं नीचैर्गमनमिति निरुक्तम्। ब्रह्महननादीत्यादिपदेन सुरापानादिसंग्रहः। तदुक्तंमहाभाष्ये-"योऽग्रजानन्नपि ब्राह्मणं हन्यात्सुरां वा पिबेत्सोऽपिमन्येपतितः स्यादिति। स्मृतौ च-"ब्रह्महत्यासुरापानं स्तेयंगुर्वङ्गनागमः। महान्तिपातकान्याहुरिति। वर्जनीयान्युक्त्वाऽनुष्ठेयान्याह-नित्यानीति। "अहरहःसन्ध्यामुपासीत,वेदाध्ययनंनित्यमनध्ययनेपातादित्यादिश्रुतिसूत्रोक्तानि सन्ध्यावन्दनादीनि, आदिना स्वाध्याय पञ्चमहायज्ञादिसंग्रहः। प्रत्यवायसाधनानि=पापजनकानि, नैमित्तिकानि=निमित्तोद्देशे न विहितानि, पुत्रजन्माद्यनुबन्धीनि=पुत्रजन्माद्यनन्तरमवश्यं कर्तव्यानि, जातेष्ट्यादीनि="पुत्रेजाते वैश्वानरंद्वादशकपालं निर्वपेदित्यादिश्रुतिविहितानीत्यर्थः। प्रायश्चित्तानीति। "प्रायः पापं विजानीयाच्चित्तं तस्यविशोधनमिति स्मृतिः। तदेवाह-पापक्षयसाधनानीति। स्मृतितत्त्वे रघुनन्दनोऽप्याह-"पापक्षयसाधनत्वनविधि बोधितंकर्म प्रायश्चित्तमिति। चान्द्रायणादीत्यादिपदात्कृच्छ्रादिपरिग्रहः। सगुणेति। निर्गुणविषयं निदिध्यासनं तु तत्त्वज्ञानार्थमेवोपयुज्यत इत्यापदेवः। मानसव्यापाररूपाणि=नतु ज्ञानरूपाणीत्यर्थः। तदुक्तं टीकायां

मुमुक्षुत्वं=मोक्षेच्छा। एवम्भूतः प्रमाताधिकारी "शान्तो दान्त" इत्यादिश्रुतेः। उक्तं च।

"प्रशान्तचित्ताय जितेन्द्रियाय
प्रहीणदोषाय यथोक्तकारिणे।
गुणान्वितायानुगताय सर्वदा
प्रदेयमेतत्सततं मुमुक्षव" इति॥

---

"इच्छातोऽनुष्ठयत्वान्मानसीक्रियैवोपासनाज्ञानमित्यपि स एव। शाण्डिल्यविद्यादीनि=आदिशब्दाद्दहरादिविद्याग्राह्या। शाण्डिल्यर्षिप्रोक्ताविद्या तु छान्दोग्योपनिषदिदर्शिता। तत्रैवकर्णेहस्यनिरीक्षणीया। एतेषां नित्यादीनामिति। आदिपदेन नैमित्तिकप्रायश्चित्तयोः संग्रहः। बुद्धिशुद्धिः=चित्तशुद्धिः, परम्=आवश्यकम्, उपासनानान्तु=सगुणब्रह्मोपासनानां स्थित्यर्थः। चित्तैकाग्र्यमिति। प्रयोजनमित्यनुषङ्गः। तच्च "अरण्यगुहापुलिनादिष्विति न्यायसूत्रानुसारं नारण्यादिष्वेव-"यत्रैकाग्र्यं तत्राविशेषादितिवेदान्तसूत्रात्। अत्र बृहदारण्यकश्रुतिमुदाहरति- तमेतमिति। वेदानुवचनेन=वेदाध्ययनेन, तस्य च फलमर्थावबोधोदृष्टत्वादितिमीमांसकाः। "दृष्टेतु नादृष्टमिति जैमिनिसूत्रात्। नेति सिद्धान्तः। अध्ययनं चाध्यापनविधिप्रयुक्तमिति प्राभाकराः। नेति वेदान्तिनः तस्यरागतः प्राप्तत्वादिति कुरुक्षेत्रीयाः विविदिषन्ति=वेदितुमिच्छन्ति, तपसा=यज्ञेन, कल्मषं-पापं, हन्ति-नाशयति, स्मृतेः=मनुस्मृतेः। अवान्तरफलम्-मुख्यफलमित्यर्थः। पितृलोकसत्यलोकप्राप्तिः=पितृलोकोविधूर्ध्वभागे। "विधूर्ध्वभागेपितरोवसन्तीति भास्कराचार्योक्तेः। सत्यलोकोब्रह्मलोकः। कर्मणा=अग्निहोत्रादिकर्मणा, विद्यया=ब्रह्मविद्यया, श्रुतिः=बृहदारण्यकश्रुतिः। साधनान्याह=नित्यानित्येति। नित्यानित्यवस्तुविवेकमाह--ब्रह्मैव नित्यमिति। एवकारोऽन्यव्यवच्छेदार्थः। इदमेवतत्त्वचिन्तामणिकृन्मतम्। तदेवाह--ततोऽन्यत्=ब्रह्मभिन्नमित्यर्थः। अखिलं=जगत्, अनित्यं=ध्वंसप्रतियोगि, इति विवेचनम्=ब्रह्मनित्यमन्यत्सकलं जगदनित्यमिति ज्ञानमि-

/ विषयो जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयं तत्रैव वेदान्तानां तात्पर्यात्। सम्बन्धस्तु तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिष-

---

त्यर्थः। ऐहिकानाम्=इहलोकभवानाम्, स्रगादिविषयाणां तज्जन्यभोगानां च, कर्मजन्यतया=कृष्यादिकर्मजन्यतया, आमुष्मिकाणां=पारलौकिकानामपि सोमपानादीनां तज्जन्यामृतत्वप्राप्त्यादीनांचाभूतसंप्लवपर्यन्तं स्थायित्वेना नित्यतया, तेभ्यः=सर्वेभ्यः,नितरां=सर्वथा विरतिः=विरामः, इहास्मिन् लोकेऽमुत्र=परलोके, फलभोगविरागः=फलं सुखं तत्साधनञ्च तस्य भोगस्तत्र विरक्तिरित्यर्थः। तत्र शमलक्षणमाह—शमस्तावदिति। श्रवणादीत्यादिपदान्मनननिदिध्यासनयोः परिग्रहः। तद्व्यतिरिक्तविषयेभ्यः=श्रवणादिव्यतिरिक्तविषयेभ्यः, मनसोनिग्रहः शमः। बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनं=निवृत्तिर्दमः। एतेषाम्=इन्द्रियाणाम्, विहितानां कर्मणाम्=श्रवणाद्यतिरिक्तानाम्, विधिना=शुश्रुक्तमार्गेण, परित्यागः=संन्यासः, अयं खलु संन्यासः सर्वोऽपि वैराग्यहेतुक एवेतिबोध्यम्। "ब्रह्मलोकतृणीकारोवैराग्यस्यावधिर्मतः। शीतोष्णादीत्यादिपदेन तज्जन्य सुखदुःख बुभुक्षापिपासादेश्च संग्रहः। सहिष्णुता=सहनशीलत्वं, तदनुगुणविषये=गुरुशुश्रूषादौ, समाधिः=निद्रालस्यादिपरित्यागेन मनसः स्थिरीकरणम्, विश्वासः=इदमित्थमेवेतिबुद्धिः, मुमुक्षुत्वं=मोक्षेच्छा, मोक्षोब्रह्मात्मतादात्म्यं तस्येच्छा, एवंभूतः=ईदृशः प्रमाता, अधिकारी=वेदान्तशास्त्राधिकारी, उक्तंचेति। उपदेशसाहस्र्यां भगवत्पादैरितिशेषः। प्रशान्तचित्ताय=शान्ताय, जितेन्द्रियाय=दान्ताय, प्रक्षीणदोषाय=रागादिदोषरहिताय, यथोक्तकारिणे=नित्यकर्मकर्त्रे, अनुगताय=अनुकूलाय, मुमुक्षवेएतत्=आत्मज्ञानम्, प्रदेयमित्यन्वयः। स्पष्टमन्यत्। अथविषयः=उच्यतेइतिशेषः। तत्रैव=जीवब्रह्मैक्य एव वेदान्तानां=ब्रह्मसूत्रादीनाम्, तात्पर्यात् तदैक्यप्रमेयस्य=तयोर्जीवब्रह्मणोरैक्यं च तत्प्रमेयं च तस्येत्यर्थः। तत्प्रतिपादकेति। तदैक्यप्रतिपादकेत्यर्थः। प्रयोजनन्तु=प्रवृत्युद्देश्यमित्यर्थः। सर्वे खलुप्राणभृतां

त्प्रमाणस्य च बोध्यबोधकभावः । प्रयोजनं तु तदैक्यप्रमेयगताज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च "तरति शोकमात्मवित्" इत्यादिश्रुतेः । "ब्रह्मविद्ब्रह्मैव भवति" इत्यादिश्रुतेश्च ॥ ४ ॥

अयमधिकारी जननमरणादिसंसारानलसन्तप्तो दीप्तशिरा

---

व्यवहाराः प्रयोजनाश्रयाः प्रवर्तन्ते । प्रयोजनमनुद्दिश्यनमन्दोपि प्रवर्तत इति भट्टपादोक्तेः । "सर्वस्यापि हि शास्त्रस्य कर्मणोवापि, कस्यचित् । यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ।। इत्युदयनोक्तेश्च । तदैक्यप्रमेयगताज्ञाननिवृत्तिः=तच्च ऐक्यं चेति तदैक्यं तदेव प्रमेयंतद्गतं=तद्विषयकं यदज्ञानं तस्य निवृत्तिरिति विग्रहः । चिन्मात्रविषयाज्ञाननिवृत्तिः प्रयोजनमित्यर्थं इत्यापदेवः । अज्ञानं वक्ष्यते । अज्ञाननिवृत्तिरेव परमपुरुषार्थः । तदुच्छित्तिः परमपुरुषार्थ इति सांख्यसूत्रात् । 'ज्ञानेनचापवर्गोविपर्ययादिष्यतेबन्ध इति सांख्यकारिकोक्तेश्च।प्रयोजनान्तरमाह–स्वस्वरूपानन्दावाप्तिश्चेति । स्वं=चैतन्यं,तत्स्वरूपोय आनन्दस्तस्यावाप्तिः=प्राप्तिरित्यर्थः। चैतन्यस्यानन्दरूपत्वे "आनन्दोब्रह्मेतिव्यजानादितिश्रुतिर्भगवतीप्रमाणम् । "आनन्दादयःप्रधानस्येति ब्रह्मसूत्रञ्च।अज्ञाननिवृत्तिरानन्दावाप्तिश्च प्रयोजनमित्युक्ते न्यायवैशेषिकाभिमतं समूलदुःखध्वंसलक्षणं भाट्टाभिमतं नित्यनिरतिशयसुखाभिव्यक्तिलक्षणं च प्रयोजनं प्रतिभायात्तन्माभूदिति विशेषणान्तरोपादानमिति मनोरञ्जनीकारः । "मानाधीनामेयसिद्धिरिति चित्सुखोक्तेः अज्ञाननिवृत्तौ छान्दोग्य श्रुतिं प्रमाणयति–तरतीति । शोकं=शोकोपलक्षितं संसारमज्ञानं वा, आदिपदात् "तत्रकोमोहः कः शोकएकत्वमनुपश्यतः" इत्यादिश्रुति संग्रहः । ब्रह्मविद्ब्रह्मैव भवतीतिश्रुतेः=मुण्डकश्रुतेः । "यथाग्निरग्नौसंक्षिप्तः समानत्वमनुव्रजेत् । तथात्मा साम्यमभ्येति ज्ञानिनः परमात्मनेति स्मृतेश्च । दासोऽहं सोऽहमितिवत् ॥ ४ ॥

अनुबन्धचतुष्टयं निरूप्यप्रकृतमाह–अयमधिकारीति । स्वस्वरूपजिज्ञासुरित्यर्थः । गुरुमनुसरतीत्यन्वयः । तत्र दृष्टान्तमाह–यथानिदाघमध्याह्नार्कदीप्त-

जलराशिमिवोपहारपाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य तमनुसरति "समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" इत्यादिश्रुतेः । स परमकृपयाध्यारोपापवादन्यायेनैनमुपदिशति "तस्मै स विद्वानुपसन्नाय प्राह" इत्यादिश्रुतेः ॥ ५ ॥

असर्पभूते रज्जौ सर्पारोपवद्वस्तुन्यवस्त्वारोपोऽध्यारोपः वस्तु सच्चिदानन्दानन्ताद्वयं ब्रह्म । अज्ञानादिसकलजडसमू-

---

शिराः शिशिरतरजलपूर्णमहाह्रदमनुसरति । तथा जननमरणादिरेव संसारानलस्तेनसन्तप्तः श्रोत्रियं=वेदान्तपारगं, ब्रह्मनिष्ठं=कृतब्रह्मसाक्षात्कारमित्यर्थः। उपहारपाणिः="रिक्तपाणिर्नगच्छेत्राजानं देवतां गुरुमितिवचनात् । सगुरुः, एनमुपदिशतीत्यन्वयः । तत्र मुण्डक श्रुतिमाह—तस्मै=मुमुक्षवे, सविद्वान्= उपसन्नाय=अध्ययनार्थमागताय, प्राह=ब्रह्मविद्यामिति शेषः ।

एतादृशोगुरुर्दैवादेवमिलति—यदुक्तं विवेकचूडामणौ—"दुर्लभं त्रयमेवैतद्दैवानुग्रहहेतुकम् । मनुष्यत्वं मुमुक्षुत्वं महा पुरुषसंश्रय इति ॥ ५ ॥

अपवादस्याध्यारोपपूर्वकत्वात्प्रथममध्यारोपं लक्षयति—वस्तुन्यवस्त्वारोप इति । 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते इत्युक्तः' तत्र दृष्टान्तमाह—असर्पभूते=सर्पभिन्ने, वस्तुत्वेनाभिमते रज्जौ, अवस्तुभूतसर्पारोपवदित्यर्थः । देशान्तरीयसर्पभाने मानाभावात् । एवं च वस्तुन्यवस्त्वारोप अध्यारोपः फलितः । सम्प्रति वस्त्ववस्तुनी क्रमेण लक्षयति—वस्तु इति । कालत्रयानपाय्यात्मैव वस्तु शब्दार्थः । स एवब्रह्म कीदृशमित्याकाङ्क्षायामाह—सच्चिदानन्दानन्ताद्वयमिति=कालत्रयाबाध्यमानत्वे सति कालत्रयेऽप्येकरूपतया विद्यमानं सत्. विज्ञानमानन्दं ब्रह्मेतिश्रुतेश्चित् । नित्यनिरतिशयसुखरूपमानन्दम्, त्रिविधपरिच्छेदशून्यमनन्तम् । यदुक्तं पञ्चदश्याम् "न व्यापित्वाद्देशतोऽन्तोनित्यत्वान्नापिकालतः । नवस्तुतोऽपि सार्वात्म्यादानन्त्यं ब्रह्मणित्रिधा ॥ "एकमेवाद्वितीयमिति श्रुतेः, "प्रपञ्चो-यदिविद्येत निवर्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥

ह्योऽवस्तु । अज्ञानं तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिदिति वदन्त्यहमज्ञ इत्याद्यनुभवात् "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतेश्च ॥ ६ ॥

इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति च व्यवह्रियते । तथाहि यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्वव्यपदेशो यथा वा जलानां समष्ट्यभिप्रायेण जलाशय इति । तथा नानात्वेन प्रतिभासमानानां जीवगताज्ञानानां समष्ट्यभिप्रायेण तदेकत्वव्यपदेशो "ऽजामेकां" इत्यादिश्रुतेः । इयं

---

इत्यद्वैतवादप्रथमाचार्य गौडपादोक्तेश्चाद्वयम् । अज्ञानादि समूहः, अवस्तु=अनिर्वचनीयम्, तत्त्वं च सदसद्भिन्नत्वम् । अज्ञानस्वरूपमाह—अज्ञानंत्विति । यत्किञ्चिदिति । वदन्तीत्यनेनान्वयः । अभियुक्ता इति शेषः । अज्ञानं हि सदसद्भ्यामनिर्वचनीयम् । तत्र कालत्रयाबाध्यत्वं सत्वं, तद्भिन्नमसत्वम् । त्रिगुणात्मकम्=रजः सत्वतमोलक्षणाःत्रयोगुणास्तद्युक्तम्, ज्ञानविरोधि=ज्ञानप्रतिबध्यम्, भावरूपं=सत्तावत्, अज्ञानस्य भावरूपत्वे प्रमाणमाह—अहमज्ञ इत्याद्यनुभवात् । अत्र श्वेताश्वतरश्रुतिमुदाहरति—देवात्मशक्तिमिति । अज्ञानमित्यर्थः । स्वगुणैः=सत्वादिभिः, निगूढां=व्याप्ताम्, तेध्यानयोगानुगता अपश्यन्निति योज्यम् ।

सम्प्रति अज्ञानं विभज्य दर्शयति—इदमज्ञानमिति । समष्ट्यभिप्रायेणैकमिति, व्यष्ट्यभिप्रायेणानेकमिति च व्यवह्रियते श्रुत्यादाविति शेषः । समष्टित्वं सर्वत्रानुस्यूतत्वं, गोत्वादिवत्, व्यष्टित्वं तद्व्यक्तित्वम् । इदमेवदृष्टान्तद्वारा स्पष्टयति—तथाहीत्यादिना । समष्ट्यभिप्रायेण=समुदायविवक्षया, एवमग्रेऽपि, जलानाम्=बहुनद्यादिजलानाम्, तथा=तद्वदित्यर्थः । नानात्वेन=अनेकत्वेन, प्रतिभासमानानां=ज्ञायमानाम्, जीवगताज्ञानानां=जीवनिष्ठाविद्यानामित्यर्थः । तदेकत्वव्यपदेशः=अज्ञानैकत्वव्यवहार इत्यर्थः, अस्मिन्नर्थे श्वेताश्वतरश्रुतिं प्रमाणयति–"अजामेकां लोहित शुक्लकृष्णामिति ॥ अज्ञानं विभज्य समष्टिं विशिनष्टि=इयमिति । समष्टिः=अज्ञानसमुदायः, उत्कृष्टोपाधितया=उत्कृष्टस्य

समष्टिरुत्कृष्टोपाधितया विशुद्धसत्त्वप्रधाना । एतदुपहितं=चैतन्यंसर्वज्ञत्वसर्वेश्वरत्वसर्वनियन्तृत्वादिगुणकमव्यक्तमन्तर्यामी जगत्कारणमीश्वर इति च व्यपदिश्यते । सकलाज्ञानावभासकत्वादस्यसर्वज्ञत्वम् । "यः सर्वज्ञः सर्ववित्" इतिश्रुतेः । ईश्वरस्येयं समष्टिरखिलकारणत्वात्कारणशरीरमानन्दप्रचुरत्वात्कोशवदाच्छादकत्वाच्चानन्दमयकोशः। सर्वोपरमत्वात्सुषुप्तिरत एव स्थूलसूक्ष्मप्रपञ्चलयस्थानमिति चोच्यते । यथा वनस्य व्यष्ट्यभिप्रायेण वृक्षा इत्यनेकत्वव्यपदेशो यथा वा जलाशयस्य व्यष्ट्यभिप्रायेण जलानीति । तथाज्ञानस्य व्यष्ट्यभिप्रायेण तदनेकत्वव्यपदेशः। "इन्द्रो मायाभिः पुरुरूप ईयत" इत्यादिश्रुतेः ।

---

चैतन्यस्य उपाधितया=विशेषणतया, विशुद्धसत्त्वं=रजस्तमोभ्यामस्पृष्टं सत्त्वं यस्याः सा विशुद्धसत्त्वप्रधाना, एतदुपहितम्=अज्ञानसमष्ट्युपहितमित्यर्थः । अव्यक्तम्=अप्रत्यक्षम् , तदेवाह–अन्तर्यामीति । "न चक्षुषा गृह्यते" इति श्रुतेः । "अदृष्टविग्रहो देवोभावग्राह्योमनोमय इति याज्ञवल्क्यस्मृतेश्च । सएवचसत्वादिगुणत्रयमवलम्ब्यब्रह्मविष्णुरुद्र इति नामत्रयं दधौ । रामकृष्णादिस्तुकार्यब्रह्मविनकश्चिद्दोषः । ईश्वरइतिव्यपदिश्यते=कथ्यते । सकलाज्ञानावभासकत्वात्=अस्य=ईश्वरस्य, सकलान्यज्ञानानिस्फुरन्ति तस्यसर्वज्ञत्वादिति भावः ईश्वरसर्वज्ञत्वे मुण्डकश्रुतिप्रमाणमाह—यः सर्वज्ञ इति । सर्वज्ञ इति सामान्यतः । सर्वविदितिविशेषतः । इति भामतीकारः । सर्वज्ञत्वेनतत्तत्कर्मानुरूपफलदातृत्वान्न वैषम्यनैर्घृण्यादिदोषप्रसङ्ग इति कुरुक्षेत्रीयाः । अत्र सर्वकर्तृत्वमपि बोध्यम् । तथा च सांख्यसूत्रम्–सहिसर्ववित्सर्वकर्तेति । ईश्वरस्येयं समष्टिः=कारणशरीरम् , आनन्दमयकोषः, सुषुप्तिः, स्थूलसूक्ष्मलयस्थानमिति चोच्यते । तत्र कारणशरीरत्वे–अखिलकारणत्वादिति, आनन्दमयत्वे–आनन्दप्रचुरत्वादिति, कोशवदाच्छादकत्वादिति च, सुषुप्तौ–सर्वोपरमत्वादिति, हेतवः । अतएव=सर्वोपर-

अत्र व्यस्तसमस्तव्यापित्वेन व्यष्टिसमष्टिताव्यपदेशः । इयं व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना । एतदुपहितं चैतन्यमल्पज्ञत्वानीश्वरत्वादिगुणकं प्राज्ञ इत्युच्यते । एकाज्ञानावभासकत्वात् । अस्य प्राज्ञत्वमस्पष्टोपाधितयानतिप्रकाशकत्वात् । अस्यापीयमहङ्कारादिकारणत्वात्कारणशरीरमानन्दप्रचुरत्वात्को

---

मत्वादेवेत्यर्थः । स्थूलसूक्ष्मप्रपञ्चलयस्थानमपि सुषुप्तिरुच्यते श्रुतौ, संज्ञाभेदोनवस्तुभेद इति भावः । सप्रपञ्चं समष्टिरूपाज्ञानं प्रदर्श्य व्यष्टिरूपाज्ञानं सदृष्टान्तमाह–यथेति, तथेति च । व्यष्ट्यभिप्रायेण=प्रत्येकाज्ञानाभिप्रायेणेत्यर्थः । तदनेकत्वव्यपदेशः=अज्ञानानेकत्वव्यपदेशः, अत्रार्थे बृहदारण्यकं श्रुतिं पठति–इन्द्र इति । इन्द्रः=परमात्मा, प्रकरणात् । मायाभिः=अज्ञानैः, पुरुरूपः=बहुरूपः, सन्नीयते=प्रकाशते, इति श्रुत्यर्थः । अत्र=अज्ञाने, व्यस्तसमस्तव्यापित्वेन=प्रत्येकसमुदायाभिप्रायेण, व्यष्टिसमष्टिताव्यपदेशः=एकस्यैवाज्ञानस्य तदवच्छिन्नचैतन्यस्य वा भेदविवक्षया व्यष्टित्वं मृद्घटादिवत्, अभेदविवक्षया च समष्टित्वं मृत्पिण्डवत्, इति सुबोधिनीकाराशयः । इयं व्यष्टिः=अज्ञानरूपा, निकृष्टोपाधितया=निकृष्टो जीवस्तदुपाधित्वेन, मलिनसत्त्वप्रधाना=अविद्यापदेनोच्यते । एतदुपहितम्=अविद्योपहितं, चैतन्यं जीवः । स च प्रतिशरीरमभिन्न एव । 'नैव स्त्री न पुमानेष नैव चायं नपुंसकः । इति श्रुतेः । यद्यच्छरीरमादत्ते तेन तेन सयुज्यते ॥ यत्तु–ईश्वर एकः जीवः प्रतिशरीरं भिन्न इति सङ्ग्रहकारः । "नानात्मानो व्यवस्थात इति कणादसूत्रोपस्कर्ताशङ्करश्चाह "कश्चिद्दुःखी कश्चित्सुखी कश्चिद्विद्वान्कश्चिन्मूर्ख इति प्रत्ययो जीवात्मनांभेदक इति तन्न, बाल्यकौमारवृद्धत्वादिवच्चैत्रमैत्रादिदेहभेदोपपत्तेरिति कुरुक्षेत्रीयः ॥ "यदल्पं तन्मर्त्यमिति श्रुतेः, इष्टे सर्वं कर्तुं ज्ञातुं चेत्यादिगुणायोगाच्चाल्पज्ञत्वानीश्वरत्वादिगुणकं जीवः प्रकर्षेणाज्ञः प्राज्ञ इत्युच्यते ॥ अत्रोपपत्तिमाह–एका ज्ञानावभासकत्वादिति । अज्ञानैकदेशावभासकत्वादित्यर्थः । अस्य=जीवस्य, अस्पष्टोपाधितया=

शवदाच्छादकत्वाच्चानन्दमयकोशः। सर्वोपरमत्वात्सुषुप्तिरत एव स्थूलसूक्ष्मशरीरप्रपञ्चलयस्थानमिति चोच्यते ॥ ७ ॥

तदानीमेतावीश्वरप्राज्ञौ चैतन्यप्रदीप्ताभिरतिसूक्ष्माभिरज्ञानवृत्तिभिरानन्दमनुभवतः। "आनन्दभुक् चेतोमुखः प्राज्ञ" इति श्रुतेः। सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्युत्थितस्य परामर्शोपपत्तेश्च। अनयोः समष्टिव्यष्ट्योर्वनवृक्षयोरिव जलाशयजलयोरिव वाऽभेदः। एतदुपहितयोरीश्वरप्राज्ञयोरपि वनवृक्षावच्छिन्नाकाशयोरिव, जलाशयजलगतप्रतिबिम्बाकाशयोरिव वाऽभेदः, "एष सर्वेश्वर" इत्यादिश्रुतेः ॥ ८ ॥]

---

मलिनसत्त्वप्रधानाज्ञानोपाधित्वादित्यर्थः। अतिप्रकाशकत्वाभावात्प्राज्ञत्वं सिध्यतीति भावः। जगत्कारणेश्वरस्य कारणशरीरस्य मानन्द प्रचुरत्वं कोशत्वं च जीवेऽप्यतिदिशति—अस्यापीयमहङ्कारादीति। सर्वोपरमत्वादिति। सर्वशब्दोऽत्रजाग्रत्स्वप्नविषयपरः स्पष्टमन्यत् ॥ ७ ॥

तदानीम्=सुषुप्तिदशायाम्, एतौ=द्वावपीश्वरप्राज्ञौ, अज्ञानवृत्तिभिः—आनन्दम्=स्वरूपानन्दमनुभवतः। कीदृशीभिः-वृत्तिभिः-चैतन्यप्रदीप्ताभिः=चिद्व्याप्ताभिः वृत्तेस्तथैवस्वभावात्। अतिसूक्ष्माभिः=अस्पष्टाभिः, तासामल्पत्वादितिभाव इत्यापद्यन्ते। अत्र माण्डूक्य श्रुतिप्रमाणमाह-आनन्दभुक् इति। चेतोमुखः=चैतन्यप्रदीप्ताज्ञानवृत्तिप्रधान इत्यर्थः। अत्रानुभवप्रमाणमप्याह—सुखमहामिति। सुखमानन्दपूर्वकम्, तत्र सुखमहमस्वाप्समित्यानन्दपरामर्शः। न किञ्चिदवेदिषमितिचाज्ञानपरामर्शः। एवं च सुषुप्तौप्रलये च प्राज्ञेश्वरावज्ञानवृत्त्यानन्दमनुभवत एवेत्यर्थः फलितः। उत्थितस्य=सुप्तोत्थितस्य, इति परामर्शोपपत्तेः=इत्थंवं स्मरणसम्भवाच्चेत्यर्थः। अनयोः=पूर्वोक्तयोः, अभेदः=प्रकाशादिवचावैशिष्ट्यमिति ग्रन्थसूत्राद् वस्तुतोऽभेद एवेत्यर्थः। यथा वनवृक्षयोः जलाशयजलयोर्नव्योमभेदकत्वं वास्तवं तद्वत् कारणसमष्टिकारणव्यष्ट्योरितिभावः। एतदुपहितयोः=कारणसमष्टिकारणव्यष्ट्युपहितयोः, प्राज्ञेश्वरयोरभेदे माण्डूक्य

वनवृक्षतदवच्छिन्नाकाशयोर्जलाशयजलतद्गतप्रतिबिम्बाकाशयोर्वाधारभूतानुपहिताकाशवदनयोरज्ञानतदुपहितचैतन्ययोराधारभूतं यदनुपहितं चैतन्यं तत्तुरीयमित्युच्यते। "शिवमद्वैतं चतुर्थं मन्यन्ते" इत्यादिश्रुतेः। इदमेव तुरीयं शुद्धचैतन्यमज्ञानादितदुपहितचैतन्याभ्यां तप्तायःपिण्डवदविविक्तं सन्महावाक्यस्य वाच्यं विविक्तं सल्लक्ष्यमिति चोच्यते ॥ ९ ॥

अस्याज्ञानस्यावरणविक्षेपनामकमस्ति शक्तिद्वयम्। आवरणशक्तिस्तावदल्पोऽपि मेघोऽनेकयोजनायतमादित्यमण्डलम-

---

श्रुतिं प्रमाणयति—एष इति। प्राज्ञ इत्यर्थः। तथा च श्रुतिः "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः। कार्यकारणतां हित्वापूर्णबोधोऽवशिष्यते ॥ अत्रेदमपि भामत्यामुक्तं बोध्यम्—"कार्यरूपेण नानात्वमभेदः कारणात्मना : हाटकात्मनाऽभेदः कुण्डलाद्यात्मनाभिदा ॥ ८।

उपाधिद्वयाच्छिन्नौ प्राज्ञेश्वरौ निरूप्य सम्प्रति तुरीयं निरूपयति—वनवृक्षेति। तदवच्छिन्नाकाशयोः, वनवृक्षावच्छिन्नाकाशयोः, अनयोः=जीवेश्वरयोः, आधारभूतम्=अधिष्ठानभूतम्, यदनुपहितचैतन्यं=सर्वव्यापितत् तुरीयं=चतुर्थमज्ञानजीवेश्वरेभ्यइत्यर्थः। उच्यते=कथ्यते। अस्मिन्नर्थे माण्डूक्य श्रुतिसंवादमाह—शान्तमिति। अधिक्रियमित्यर्थः। शिवम्=आनन्दरूपम्, अद्वैतम्=भेदरहितम्, महावाक्यस्य='तत्त्वमसिश्वेतकेतो' इति वाक्यस्य, इदमेवतुरीयं शुद्धचैतन्यं पूर्वोक्त चैतन्यद्वयेन सहैकत्वविवक्षायां वाच्यत्वं लभते भेदविवक्षायां च लक्ष्यत्वं लभते इत्यर्थः ॥ ९ ॥

जीवेश्वरौ निरूप्याऽज्ञाने शक्तिद्वयमाह—अस्याज्ञानस्येति। आवरणविक्षेपनामकं शक्तिद्वयमस्ति=विद्यते, सच्चिदानन्दस्वरूपमाव्रियतेयया सावरण शक्तिः। ब्रह्मादिस्थावरान्तं जगत् विक्षिप्यते सृज्यतेयया सा विक्षेपशक्तिः। एवं चैतत् शक्तिद्वयमज्ञानस्येत्यर्थः। कार्यानुकूल कारणसामर्थ्यं हि शक्तिः। अनुकूलत्वं च फलनिष्ठजन्यतानिरूपितजनकत्वम्। आवरणशक्तिं सदृष्टान्ता-

चलोकयितृनयनपथपिधायकतया यथाच्छादयतीव तथाज्ञानं परिच्छिन्नमप्यात्मानमपरिच्छिन्नमसंसारिणमवलोकयितृबुद्धिपिधायकतयाच्छादयतीव तादृशं सामर्थ्यम्। तदुक्तं ॥

"घनच्छन्नदृष्टिर्घनच्छन्नमर्कं
यथा मन्यते निष्प्रभं चातिमूढः।
तथा बद्धवद्भाति यो मूढदृष्टेः
स नित्योपलब्धिस्वरूपोऽहमात्मेति" ॥

अनयैवावरणशक्त्यावच्छिन्नस्यात्मनः कर्तृत्वभोक्तृत्वसुखदुःखमोहात्मकतुच्छसंसारभावनापि सम्भाव्यते। यथा स्वाज्ञानेनावृतायां रज्ज्वां सर्पत्वसम्भावना। विक्षेपशक्तिस्तु यथा रज्ज्वज्ञानं स्वावृतरज्जौ स्वशक्त्या सर्पादिकमुद्भावयत्येवमज्ञानमपि स्वावृतात्मनि विक्षेपशक्त्याकाशादिप्रपञ्चमुद्भावयति तादृशं सामर्थ्यम्। तदुक्तं ॥

---

माह—आवरणशक्तिस्तावदिति। यथाल्पोऽपि मेघोऽनेकयोजनविस्तीर्णमादित्यमण्डलमवलोकयितृपुरुषदृष्टिमात्रावच्छादकत्वेनाच्छादयतीत्युपचर्यते, तथाऽज्ञानं परिच्छिन्न=मल्पमपि, प्रमातृ चैतन्यपिधायकतयात्मानमाच्छादतीव, अस्मिन्नर्थे हस्तामलकाचार्यसम्मतिमाह—तदुक्तमित्यादिना। यथा मेघच्छन्नदृष्टिरतिमूढोमेघच्छन्नमर्कं=सूर्यं निष्प्रभं मन्यते, तथायोमूढदृष्टेरज्ञातावृतचैतन्यस्यबद्धवद्भाति स नित्यज्ञानस्वरूपआत्माऽहमितिपद्यार्थः। उक्तामावरणशक्तिं तत्कार्यं द्वाराबुद्धिमारोहयति—अनयैवेति। आवरणशक्त्या=आवरणशक्तियुक्तयाऽविद्ययेत्यर्थः। अवच्छिन्नस्य=युक्तस्य, आत्मनोऽहं कर्ताऽहं सुख्यहं दुःखीत्यादि संसारभावनाभवति। अर्थादियमेवशक्तिरात्मनोभेदबुद्धिजनकत्वेन संसारकारणं भवतीतिभावः। अत्र दृष्टान्तमाह—यथेति। आवृतायाम्=आच्छादितायाम्, रज्ज्वाम्=रज्ज्वच्छिन्न चैतन्य इत्यर्थः। विक्षेपशक्तिमपिसदृष्टान्तां दर्शयति—विक्षेपशक्तिस्त्विति। एवमज्ञानमपि=आत्म-

"विक्षेपशक्तिर्लिङ्गादि ।
ब्रह्माण्डान्तं जगत्सृजेद्" इति ॥ १० ॥

शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तं स्वोपाधिप्राधान्यतयोपादानं च भवति । यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरप्रधानतयोपादानं च भवति ॥ ११ ॥

---

विषयकमज्ञानमपि, स्वावच्छिन्न आत्मनि विक्षेपशक्तिमहिम्नाऽऽकाशादिप्रपञ्चमुद्भावयति=उत्पादयतीति सुबोधिनीकारः । तादृशं सामर्थ्यम्=प्रपञ्चजननानुकूलमित्यर्थः । अत्र वाक्यसुधासम्मतिमाह—तदुक्तमिति । आवरणविक्षेपशक्तिद्वयविशिष्टमज्ञानमात्मनो जगत्कारणत्वोपाधिर्लिङ्गशरीरादिब्रह्माण्डान्तं जगत्सृजेदिति भावः ॥ १० ॥

सम्प्रत्यज्ञानकार्यनिरूपणाय तत्रोपादानं निमित्तं च निरूपयति—शक्तिद्वयवदिति । अज्ञानोपहितम्=अज्ञानविषयतोपहितमित्यर्थः । स्वप्रधानतया स्वचैतन्यप्रधानतया, निमित्तमिति । तच्चनदण्डादिसाधारणं निमित्तकारणत्वमात्रं, किन्तु कार्यानुकूलज्ञानवत्त्वरूपं कर्तृत्वम्, तच्च स्वरूपेणैवेश्वरस्यासम्भवतिनाविद्याद्वारा तस्या जडत्वादित्यापदेवः । स्वोपाधिप्रधानतया=स्वोपाधिभूताऽविद्याप्रधानतयेत्यर्थः । उपादानम्=उपादानकारणम्, ननु कथमेकस्यैवात्मनो निमित्तत्वमुपादानत्वं चेति तत्राह—यथा लूतेति । लूता=उर्णनाभिः तन्तुकार्यं प्रति=स्वोत्पाद्यमानतन्तुनिर्माणकार्यं प्रतीत्यर्थः । स्वप्रधानतया=प्रसिद्धकार्पासतूलकाष्ठयन्त्रादि सहायमनपेक्ष्यैव, तन्तून्, तत्कार्यं च जालरूपं सृजति, ततश्च निमित्तं, स्वशरीरप्रधानतया=लालारूपस्वशरीरावयवप्रधानतयेत्यर्थः । उपादानम्=स्वतादात्म्यापन्नकार्यजनकत्वम् भवति । तदुक्तं शारीरके "तन्तुनाभस्य क्षुद्रतरजन्तुभक्षणाल्लालाकठिनतामापद्यमाना तन्तुर्भवतीति । एवमीश्वरस्यापि निमित्तोपादानकारणत्वं भवतः । अधिकं प्रकृतिश्च—साक्षाच्चोभयाम्नानादित्यादिब्रह्मसूत्रेषु तद्भाष्ये च द्रष्टव्यम् ॥ ११ ॥

तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाश आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी चोत्पद्यत "एतस्मादात्मन आकाशः सम्भूत" इत्यादिश्रुतेः । तेषु जाड्याधिक्यदर्शनात्तमःप्राधान्यं तत्कारणस्य । तदानीं सत्त्वरजस्तमांसि कारणगुणप्रक्रमेण तेष्वाकाशादिषूत्पद्यन्ते । एतान्येव सूक्ष्मभूतानि तन्मात्राण्यपञ्चीकृतानि चोच्यन्ते । एतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि चोत्पद्यन्ते ॥ १२ ॥

सूक्ष्मशरीराणि सप्तदशावयवानि लिङ्गशरीराणि । अवय-

---

ब्रह्मणः सृष्टिस्थितिलयकारणत्वमुक्तं तत्र सृष्टिक्रममाह—तमः प्रधानेति । विक्षेपशक्तिप्रधानमायोपहितादीश्वरादित्यर्थः । ननु ब्रह्मणः सृष्टिकारणत्वं न संभवति प्रयोजनाभावादिति चेन्न, लोकवत्तुलीलाकैवल्यमिति ब्रह्म सूत्रात् लीलाविलास इति परिमलकारः । आकाशः=शब्दगुणक उत्पद्यत इति शेषः । यत्तु दीधितिकारो रघुनाथभट्टाचार्य आकाशस्येश्वरेऽन्तर्भावं कृत्वा तत्पृथक्त्वं खण्डितवांस्तन्न समीचीनम्, "अशब्दमस्पर्शमगन्धवच्चयदिति कठश्रुतिविरोधादिति कुरुक्षेत्रीयाः । "न वियदश्रुते, रित्यादीनि ब्रह्मसूत्राणि तु पूर्वपक्षाभिप्रायाणि । नच न्यायवैशेषिकाभिमतपरमाणूनामेव जगत्कारणत्वमस्त्विति वाच्यम् । अद्वैतश्रुतिविरोधापत्त्या परमाणोर्नित्यत्वानभ्युपगमात् । एवं "प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः, इति सांख्यरीत्या प्रधानादपि प्रपञ्चोत्पत्तिर्नाश्रयणीया, श्रुतिविरोधे स्मृतेरप्रामाण्यात् । अत्र तैत्तिरीयश्रुतिं प्रमाणयति—"एतस्मादिति । तमःप्राधान्ये कारणमाह— तेषु जाड्येति । "कारणगुणपूर्वकः कार्यगुणो दृष्ट इति कणभक्षसमयादिति भावः । तत्कारणस्य=आकाशादिकारणाज्ञानस्येत्यर्थः । तदानीं=उत्पत्तिकाले, सत्त्वाद्यस्त्रयोऽपिगुणाः, आकाशादिपञ्चभूतेषूत्तरोत्तराधिक्येन जायन्ते । एतान्येव=आकाशादीन्येव, सूक्ष्मभूतानि=व्यवहाराक्षमाणि, तन्मात्राणि=शब्दस्पर्शरूपरसगन्धतन्मात्राणि, अपञ्चीकृतशब्देनोच्यन्ते । श्रुत्यादाविति शेषः । एतेभ्यः=तन्मात्रेभ्यः अपञ्चीकृतभूतेभ्य इति यावत् ॥ १२ ॥

सूक्ष्मशरीराणीति । "अंगुष्ठमात्रं पुरुषं निश्चकर्षयमोबलादित्यत्रांगुष्ठमात्र-

वास्तु ज्ञानेन्द्रियपञ्चकं बुद्धिमनसी कर्मेन्द्रियपञ्चकं वायुपञ्चकं चेति । ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि । एतान्याकाशादीनां सात्त्विकांशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पद्यन्ते । बुद्धिर्नाम निश्चयात्मिकान्तःकरणवृत्तिः । मनो नाम सङ्कल्पविकल्पात्मिकान्तःकरणवृत्तिः । अनयोरेव चित्ताहङ्कारयोरन्तर्भावः । एते पुनराकाशादिगतसात्त्विकांशेभ्यो मिलितेभ्य उत्पद्यन्ते । एतेषां प्रकाशात्मकत्वात्सात्त्विकांशकार्यत्वम् । इयं बुद्धिर्ज्ञानेन्द्रियैः सहिता विज्ञानमयकोशो भवति । अयं कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वाद्यभिमानत्वेनेहलोकपरलोकगामी व्यावहारिको जीव इत्युच्यते ।

---

त्वेन सूक्ष्मशरीरतोपलक्ष्यते । सप्तदशावयवानि=सप्तदशावयवा एकदेशा येषां तानीत्यर्थः । लिङ्गशरीराणि=लिङ्गनाज्ज्ञापनाल्लिङ्गमिति सांख्यतत्त्वकौमुदीकारः । लिङ्ग्यते ज्ञाप्यते प्रत्यगात्मसद्भाव एभिस्तानि, 'सप्तदश प्रजापतिरिति श्रुतेः—लिङ्गशरीरस्य सप्तदशत्वं निरूपितं, तदुक्तमभियुक्तैः—"मुख्यं तु सप्तदशकं प्रथितं हि लिङ्गमिति ॥ सुरेश्वरादिभिस्तु पञ्चीकरणवार्तिके पुर्यष्टकं लिङ्गं वर्णितम् । ज्ञानेन्द्रियाणि=ज्ञानसाधनानि इन्द्रियाणि श्रोत्रादीनि, इन्द्रस्यात्मनश्चिह्नत्वादिन्द्रियमुच्यते, तत्र कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रं स्पष्टमन्यत् । एतानि=ज्ञानेन्द्रियाणि, आकाशादीनामित्यादिपदेन वायुतेजोजल पृथिवीनां परिग्रहः । व्यस्तेभ्यः=प्रातिस्विकेभ्यः, क्रमेणेति । तथाचाकाकाश सात्त्विकांशाच्छ्रोत्रं वायोः सात्त्विकांशात्त्वगिन्द्रियमित्येवमित्यर्थः । बुद्धिं लक्षयति—बुद्धिर्नामेति । ब्रह्मैवाऽहमितिनिश्चयात्मिकान्तःकरणवृत्तिरित्यर्थः । संकल्पविकल्पेति । अहं चिद्रूपो देहो वेति संशयात्मिकान्तःकरणवृत्तिरेव मनः । अनयोरेव=बुद्धिमनसोरेव, तत्रचित्तस्य बुद्धावहंकारस्य मनस्यन्तर्भावः । एते पुनरिति । चित्तबुद्धिमनोऽहंकाररूपान्तःकरणभेदा इत्यर्थः । एतेषाम्=ज्ञानेन्द्रियाणां चित्तादीनां च, ज्ञानेन्द्रियैः=चक्षुस्त्वक्श्रोत्ररसनघ्राणैरित्यर्थः । अयम्=विज्ञानमयकोशावच्छिन्नश्चिदात्मा जीव इत्युच्यत इति मनोरञ्जनीकारः । इहलोकपरलोकगामी=तथाच श्रूयते—"ससमानः सन्नुभौ लोकावनुसञ्चरतीति ।

मनस्तु ज्ञानेन्द्रियैः सहितं सन्मनोमयकोशो भवति। कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि। एतानि पुनराकाशादीनां रजोंशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पद्यन्ते। वायवः प्राणापानव्यानोदानसमानाः। प्राणो नाम प्राग्गमनवान्नासाग्रस्थानवर्त्ती। अपानो नामावाग्गमनवान्पाय्वादिस्थानवर्त्ती। व्यानो नाम विष्वग्गमनवानखिलशरीरवर्त्ती। उदानो नाम कण्ठस्थानीय ऊर्ध्वगमनवानुत्क्रमणवायुः। समानो नाम शरीरमध्यगताशितपीतान्नादिसमीकरणकरः। केचित्तु नागकूर्मकृकलदेवदत्तधनञ्जयाख्याः पञ्चान्ये वायवः सन्तीति वदन्ति। तत्र नाग उद्गिरणकरः। कूर्म उन्मीलनकरः। कृकलः क्षुत्करः। देवदत्तो जृम्भणकरः। धनञ्जयः पोष-

---

मनोमयकोशमाह—मनस्त्विति। कर्मेन्द्रियाणि—कर्मसाधनानीन्द्रियाणि, वाक्पाणिपादपायूपस्थाख्यानि=सांख्येऽप्युक्तम्—'वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्याहुः। तत्र पायुर्गुदम्, उपस्थं लिङ्गेन्द्रियम्, स्पष्टमन्यत्। एतानि=कर्मेन्द्रियाणीत्यर्थः। रजोंशेभ्यः=तथाच रजःप्रधानाकाशाद्वागिन्द्रियं, रजःप्रधानवायोः पाणीन्द्रियमुत्पद्यत एवमग्रेऽपि बोध्यम्। पञ्चवृत्तिर्मनोवदिति ब्रह्मसूत्रात् वायुपञ्चकं विभजते—वायव इति। यथोद्देशं प्राणस्य लक्षणमाह—प्राणोनाम=प्राग्गमनवान्—ऊर्ध्वगमनवानित्यर्थः। नासाग्रस्थानवर्ती=नासाग्रसंचारी, अवाग्गमनवान्=अधोगमनवान्, पाय्वादिस्थानवर्ती वायुरपान इत्यर्थः। विष्वग्गमनवान्=सर्वतोगमनशीलः, अखिलशरीरवर्ती=सर्वशरीरावयवव्यापी व्यानः। उत्क्रमणवायुः=उत्क्रमणशीलः कण्ठस्थायी वायुरुदानः। अशितपीतान्नादिसमीकरणकरः=शरीरमध्यगतान्नरसादिनेता वायुः समानः। स्वमतपरिशुद्धये कापिलमतमुत्थापयति—केचित्त्विति। तेषां लक्षणान्याह तत्र—नाग इति। उद्गीर्णकरः=उद्गीरणं छर्दिस्तत्करः, उन्मीलनं=विकासः, क्षुत्करः=क्षुधाकरः, यथा महाभाष्ये—शक्यं चानेन श्वमांसादिभिः क्षुत्प्रतिहन्तुम्। जृम्भणं=गात्रविनामः, पोषणकरः=पोषणं पुष्टिस्तत्कृत्। एतेषां=नागादी-

णकरः। एतेषां प्राणादिष्वन्तर्भावात्प्राणादयः पञ्चैवेति केचित्। एतत्प्राणादिपञ्चकमाकाशादिगतरजोंशेभ्यो मिलितेभ्य उत्पद्यते। इदं प्राणादिपञ्चकं कर्मेन्द्रियैः सहितं सत्प्राणमयकोशो भवति। अस्य क्रियात्मकत्वेन रजोंशकार्यत्वम्। एतेषु कोशेषु मध्ये विज्ञानमयो ज्ञानशक्तिमान् कर्तृरूपः। मनोमय इच्छाशक्तिमान् करणरूपः। प्राणमयः क्रियाशक्तिमान् कार्यरूप। योग्यत्वादेवमेतेषां विभाग इति वर्णयन्ति। एतत्कोशत्रयं मिलितं सत्सूक्ष्मशरीरमित्युच्यते ॥ १३ ॥

अत्राप्यखिलसूक्ष्मशरीरमेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिरनेकबुद्धिविषयतया वृक्षवज्जलवद्वा व्यष्टिरपि भवति। एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः प्राणश्चेत्युच्यते सर्वत्रानुस्यूतत्वाज्ज्ञानेच्छाक्रियाशक्तिमदुपहित-

---

नाम्, अन्तर्भावात्=तत्र नागस्योदाने, कूर्मस्य व्याने, कृकरस्य समाने, देवदत्तस्यापाने, धनञ्जयस्य समानेऽन्तर्भाव इति भावः। केचित्=औपनिषदाः, तथाच बृहदारण्यके–"प्राणोऽपानोव्यान उदानः समानोऽन इति। एतत्प्राणादीति। अपञ्चीकृतपञ्चमहाभूतेभ्यो रजःप्रधानेभ्यः प्राणादयो जायन्त इत्यर्थः। अस्य=कर्मेन्द्रियपञ्चकस्य, प्राणादिपञ्चकस्य चेत्यर्थः। क्रियात्मकत्वेन=प्राणादीनां क्रियात्मकत्वाद्रजःकार्यत्वमित्यर्थः। एतेषु कोशेषु=पञ्चस्वित्यर्थः। मध्ये=अतएव षष्ठ्यर्थे सप्तमी एतेष्विति। करणरूपः=विवेकसाधनत्वात्, स्पष्टमन्यत्, इदमेव कोषत्रयं सूक्ष्मशरीरमिति व्यवह्रियते इत्याह–एतत्कोषेति॥१३॥

सूक्ष्मशरीरं द्विविधं समष्टिरूपं व्यष्टिरूपं च अस्य समष्टित्वे हेतुमाह—अत्रापीति। एकबुद्धिविषयतया=हिरण्यगर्भेण स्वीयैकबुद्ध्याविषयीकृतत्वात्समष्टित्वम्। तत्र दृष्टान्तमाह–वनवदित्यादि। अनेकबुद्धिविषयतया=अनेकेषां जीवानां स्वस्वबुद्धिविषयत्वेन व्यष्टित्वम्। तत्रापि दृष्टान्तमाह–वृक्षवदित्यादि। वृक्षाक्षां पृथ्वीं तिष्ठतीति वृक्षस्तरुः स्पष्टमन्यत्। चैतन्यस्य व्यपदेशविशेषानाह–एतत्समष्टीति। व्यपदेशत्रये निमित्तमाह–सर्वत्रेत्यादिना। सर्व-

त्वाच्च । अस्यैषा समष्टिः स्थूलप्रपञ्चापेक्षया सूक्ष्मत्वात्सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात्स्वप्नोऽत एव स्थूलप्रपञ्चलयस्थानमिति चोच्यते । एतद्व्यष्ट्युपहितं चैतन्यं तैजसो भवति तेजोमयान्तःकरणोपहितत्वात् । अस्यापीयं व्यष्टिः स्थूलशरीरापेक्षया सूक्ष्मत्वादिति हेतोरेव सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात्स्वप्नोऽत एव स्थूलशरीरलयस्थानमिति चोच्यते । एतौ सूत्रात्मतैजसौ तदानीं मनोवृत्तिभिः सूक्ष्मविषयाननुभवतः "प्रविविक्तभुक्तैजस" इत्यादिश्रुतेः । अत्रापि समष्टिव्यष्ट्योस्तदुपहितसूत्रात्मतैजसयोर्वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिबिम्बाकाशवच्चाभेदः । एवं सूक्ष्मशरीरोत्पत्तिः ॥ १४ ॥

/स्थूलभूतानि तु पञ्चीकृतानि । पञ्चीकरणं त्वाकाशादिपञ्चस्वेकैकं द्विधा समं विभज्य तेषु दशसु भागेषु प्राथमिकान्पञ्च भागान्प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां भागानां

---

त्रानुस्यूतत्वात्=विद्यमानत्वात्सूत्रात्मा । हेत्वन्तरमाह—ज्ञानेति । ज्ञानेच्छाक्रियाशक्तिमत् कोशत्रयोपाध्यवच्छिन्नत्वादित्यर्थः । अस्य हिरण्यगर्भस्य, जाग्रद्वासनामयत्वात् स्वप्नः=स्वप्नजम्, अतएव=वासनामयत्वादेव, तैजसत्वे हेतुमाह—तेजोमयेति । अस्यापि=तैजसस्यापि, तदानीम्=स्वप्नावस्थायाम् , सूक्ष्मविषयान=शब्दादिविषयानित्यर्थः । सूत्रात्मतैजसौ अनुभवतः=प्राज्ञेश्वरावज्ञानवृत्तिभिरानन्दमिवेति भावः । अस्मिन्नर्थे माण्डूक्य श्रुतिप्रमाणमाह—"प्रविविक्तभुक्तैजस इति । प्रविविक्तं=स्थूलात्सूक्ष्मं वासनामयं भुंक्ते इति प्रविविक्तभुक् तैजस इति श्रुत्यर्थः । अत्रापीति प्रघट्टकः पूर्ववत् स्पष्टार्थः । सम्प्रति सूक्ष्मशरीरोत्पत्तिप्रकरणमुपसंहरति––एवमिति ः स्थूलशरीरोत्पत्तिमाह—स्थूलेति । अपञ्चीकृतसूक्ष्मभूतापेक्षया स्थूलभूतानि पञ्चीकृतानीत्यर्थः । पञ्चीकरणं स्थूलतापादनं, तत् प्रकारमाह—पञ्चीकरणं त्वाकाशादि पञ्चस्विति । वियदादि पञ्चभूतानि प्रत्येकं द्विधा विभज्यन्ते, तेषु आकाशादिषु दशसुभागेषु प्राथमिकान्पञ्चभागान् चतुर्धा समं=तुल्यं विभज्य=

स्वस्वद्वितीयार्धभागपरित्यागेन भागान्तरेषु योजनम् । तदुक्तं-

"द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात्पञ्चपञ्च ते" इति ॥

अस्याप्रामाण्यं नाशङ्कनीयं त्रिवृत्करणश्रुतेः पञ्चीकरणस्याप्युपलक्षणत्वात् । पञ्चानां पञ्चात्मकत्वे समानेऽपि तेषु च "वैशेष्यात्तद्वादस्तद्वाद" इति न्यायेनाकाशादिव्यपदेशः सम्भवति । तदानीमाकाशे शब्दोऽभिव्यज्यते वायौ शब्दस्पर्शावग्नौ शब्दस्पर्शरूपाण्यप्सु शब्दस्पर्शरूपरसाः पृथिव्यां शब्दस्पर्शरूपरसगन्धाश्च ॥ १५ ॥

एतेभ्यः पञ्चीकृतेभ्यो भूतेभ्यो भूर्भुवः स्वर्महर्जनस्तपः सत्यमित्येतन्नामकानामुपर्युपरि विद्यमानानामतलवितलसुतलरसातलतलातलमहातलपातालनामकानामधोऽधो विद्यमानानां लोकानां ब्रह्माण्डस्य तदन्तर्वर्त्तिचतुर्विधस्थूलशरीराणां तदुचितानामन्नपानादीनां चोत्पत्तिर्भवति । चतुर्विधशरीराणि तु

---

त्रिभागं कृत्वा, स्वार्धपरित्यागेन चतुर्णां=मध्ये एकैकस्य सन्निवेशेन पंचीकृतानि स्थूलानि भवन्ति, अत्राधिकं वेदान्तपरिभाषायां द्रष्टव्यम् अस्मिन्नर्थे विद्यारण्यसम्मतिमाह—तदुक्तमिति=पञ्चदश्यामिति शेषः । अस्य=पञ्चीकरणस्य, अप्रामाण्यं=प्रमाणाभावः, नाशंकनीयं, त्रिवृत्करणश्रुतेः, तेजोबन्नानि त्रीणि भूतानि द्विधा विदार्य प्रतिभूतमेकैकमर्धं द्विधा प्रस्फोट्य इतरभूतद्वयेयोजनमिति त्रिवृत्करण श्रुत्यर्थः। उपलक्षणत्वात्=स्वबोधकत्वे सतीतरबोधकत्वमुपलक्षणत्वम् । तेषु च=पञ्चभूतेषु च, वैशेष्यात्=पृथिव्यादिभागानां मांसादीनामाधिक्यात्तद्वादः-नभः पवनः तेजो जलं पृथिवीत्यादिव्यवहारः सम्भवतीति ब्रह्मसूत्रार्थः । तदानीम्=पञ्चीकरणकाले, आकाशे=पंचीकृताकाशे, स्पष्टमन्यत् ॥१५॥

पञ्चीकृतभूतेभ्यो ब्रह्माण्डोत्पत्तिप्रकारमाह-एतेभ्य इति पञ्चभूतेभ्यः, उपर्युपरिविद्यमानानां सप्तलोकानामधोऽधश्चसतां सप्तलोकानामुत्पत्तिर्भवति, ब्रह्माण्डस्य च, तदन्तर्वर्ति=ब्रह्माण्डान्तर्वर्तीत्यर्थः । तदुचितानाम्=तद्भोग्या-

जरायुजाण्डजोद्भिज्जस्वेदजाख्यानि । जरायुजानि जरायुभ्यो जातानि मनुष्यपश्वादीनि । अण्डजान्यण्डेभ्यो जातानि पक्षिपन्नगादीनि । उद्भिज्जानि भूमिमुद्भिद्य जातानि कक्षवृक्षादीनि । स्वेदजानि स्वेदेभ्यो जातानि यूकामशकादीनि ॥ १६ ॥

अत्रापि चतुर्विधसकलस्थूलशरीरमेकानेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिर्वृक्षवज्जलवद्वा व्यष्टिरपि भवति। एतत्समष्ट्युपहितं चैतन्यं वैश्वानरो विराडित्युच्यते सर्वनराभिमानित्वाद्विविधं राजमानत्वाच्च । अस्यैषा समष्टिः स्थूलशरीरमन्नविकारत्वादन्नमयकोशः स्थूलभोगायतनत्वाच्च स्थूलशरीरं जाग्रदिति च व्यपदिश्यते । एतद्व्यष्ट्युपहितं चैतन्यं विश्व

नाम्, चतुर्विधशरीराणि नामतो निर्दिशति—जरायुजेति। तत्र जरायुजमण्डजं च शुक्रशोणितसंनिपातजयोनिजस्यभेदः प्रशस्तपादभाष्यात् । जरायुभ्यो जातानि=गर्भाशयो जरायुः स्यादित्यमरः । तेभ्यो जातान्युत्पन्नानि, पक्षिपन्नगादीनि=पक्षी प्रसिद्धः । पन्नगः सर्पः स्पष्टमन्यत् । उद्भिज्जानि= सुश्रुतमते—इन्द्रगोपमण्डूकादीनि । चरकमते—वृक्षादीनि, स्वेदजानि=स्वेदो-धर्माम्भस्तज्जानि, यूका प्रसिद्धा, मशको मत्सरः काव्यप्रकाशोक्तेः। एवं पाञ्चभौतिकत्वं शरीरस्यात्रमते सम्यक् सिद्धम् ॥ १६ ॥

पूर्ववदत्रापि समष्टिव्यष्टिभेदमाह—अत्रापीति । अर्थात्—चतुर्विधसकलस्थूलशरीरमेकबुद्धिविषयत्वेन समष्टित्वं वनवत्, अनेकबुद्धिविषयत्वेन व्यष्टित्वं वृक्षवल्लभत इत्यर्थः । सम्प्रति यावत्स्थूलशरीरसमष्ट्युपहित चैतन्यस्य नामाह—एतत्समष्ट्युपहितमिति । चैतन्यमीश्वरः, वैश्वानरो विराडित्युच्यते । तत्र हेतुमाह—सर्वनरेति । सर्वशब्दो विश्वपर्यायः, विश्वनराभिमानित्वाद्वैश्वानरः । विविधं राजमानत्वाद्विराट् । 'सहस्रशीर्षा' विश्वतश्चक्षुरित्यादिश्रुतयोऽत्र मानम् । अस्य=विराट् चैतन्यस्य, एषा=पूर्वोक्ता समष्टिः स्थूलशरीरमित्यर्थः । स्थूलभोगायतनत्वात्=स्थूलशरीरविषयप्रयुक्तसुखदुःखभोगायतनत्वात्, स्थूलशरीरं जाग्रदिति च व्यपदिश्यते=कथ्यते, एतद्व्यष्टीति । चतु

इत्युच्यते सूक्ष्मशरीराभिमानमपरित्यज्य स्थूलशरीरादिप्रविष्टत्वात् । अस्याप्येषा व्यष्टिः स्थूलशरीरमन्नविकारत्वादेव हेतोरन्नमयकोशो जाग्रदिति चोच्यते । तदानीमेतौ विश्ववैश्वानरौ दिग्वातार्कवरुणाश्विभिः क्रमान्नियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन क्रमाच्छब्दस्पर्शरूपरसगन्धानग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमान्नियन्त्रितेन वागादीन्द्रियपञ्चकेन क्रमाद्वचनादानगमनविसर्गानन्दांश्चन्द्रचतुर्मुखशङ्कराच्युतैः क्रमान्नियन्त्रितेन मनोबुद्ध्यहङ्कारचित्ताख्येनान्तरिन्द्रियचतुष्केण क्रमात्सङ्कल्पनिश्चयाहङ्कार्यचैत्तांश्च सर्वानेतान् स्थूलविषयाननुभवतो "जागरितस्थानो बहिःप्रज्ञ" इत्यादिश्रुतेः । अत्राप्यनयोः स्थूलव्यष्टिसमष्ट्योस्तदुपहितविश्ववैश्वानरयोश्च वनवृक्षवत्तदवच्छिन्ना-

---

विधशरीराणां या व्यष्टिः=तत्तच्छरीरव्यक्तिस्तदुपहितं चैतन्यं विश्व इत्युच्यत इत्यर्थः। अपरित्यज्य=न त्यक्त्वैव, अस्यापि=अस्य चैतन्यस्यापि, जाग्रदिति=जाग्रद्दशायां विद्यमानत्वादित्यर्थ इत्यापदेवः । तदानीम्=जाग्रद्दशायाम्, दिगिति। दिक्=प्राच्यादि दिशः, "दशदिशस्तु मयस्येति प्रशस्तपादभाष्यम्। वातो वायुः, अर्कः=सूर्यः, वरुणो जलाधिष्ठातृदेवः, अश्विनीकुमारौ, तैः=क्रमात= यथाक्रमम्, नियन्त्रितेन=अधिष्ठितेन, श्रोत्रादीन्द्रियपञ्चकेन जनितानिति शेषः। शब्दस्पर्शरूपरसगन्धाननुभवतो विश्ववैश्वानरो इत्यनेन सम्बध्यते । एवमग्रेऽपि बोध्यम्। अग्नीन्द्रेति । अग्निः=प्रसिद्धः, इन्द्रो देवराजः, उपेन्द्रो विष्णुः, यमो यमराजः, प्रजापतिर्ब्रह्मा, तैः, कण्ठताल्वादिस्थानमिन्द्रियं वाक् तदादिना विसर्गो मलमूत्रत्यागः, आनन्दो विषयानन्दः, तच्चानन्दमनङ्गरङ्गरतिरहस्यकारादयः परमात्मपरमानन्देन तुल्यमाहुः। 'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवतीति श्रुतेः। अधिकं मदीये साहित्यबिन्दौ द्रष्टव्यम्। चन्द्रश्चन्द्रमा, चतुर्मुखो ब्रह्मा, शङ्करो महादेवः, अच्युतो विष्णुः, तैः, अस्मिन्नर्थे माण्डूक्य श्रुतिं संवादयति–जागरितस्थान इति । इन्द्रियैरर्थोपलब्धिर्जागरितम् तत्स्थानं यस्य सः, बहिःप्रज्ञः=बहिः=स्वात्मव्यतिरिक्तशब्दादिविषयेषु प्रज्ञा बुद्धिर्यस्य सः,

काशवच्च जलाशयजलवत्तद्गतप्रतिबिम्बाकाशवच्च पूर्ववदभेदः। एवं पञ्चीकृतपञ्चभूतेभ्यः स्थूलप्रपञ्चोत्पत्तिः॥ १७॥

एतेषां स्थूलसूक्ष्मकारणप्रपञ्चानामपि समष्टिरेको महान्प्रपञ्चो भवति। यथावान्तरवनानां समष्टिरेकं महद्वनं भवति। यथा वावान्तरजलाशयानां समष्टिरेको महान् जलाशयः। एतदुपहितं वैश्वानरादीश्वरपर्यन्तं चैतन्यमप्यवान्तरवनावच्छिन्नाकाशवदवान्तरजलाशयगतप्रतिबिम्बाकाशवच्चैकमेव। आभ्यां महाप्रपञ्चतदुपहितचैतन्याभ्यां तप्तायः पिण्डवदविविक्तं सदनुपहितं चैतन्यं "सर्वं खल्विदं ब्रह्म" इति वाक्यस्य वाच्यं भवति विविक्तं सल्लक्ष्यमपि भवति। एवं वस्तुन्यवस्त्वारोपोऽध्यारोपः सामान्येन प्रदर्शितः॥ १८॥

इदानीं प्रत्यगात्मनीदमिदमयमयमारोपयतीति विशेषत

---

अत्राप्यनयोः=विश्ववैश्वानरयोः पूर्ववदभेदः। स्थूलव्यष्टिसमष्ट्योर्वनवृक्षवदभेदः। तदुपहितविश्ववैश्वानरयोः तदवच्छिन्नाकाशवदभेदः। सम्प्रति स्थूलप्रपञ्चोत्पत्तिमुपसंहरन्नाह–एवं पञ्चीकृतपञ्चभूतेभ्यः स्थूलप्रपञ्चोत्पत्तिरिति।

अवान्तरप्रपञ्चमुक्त्वा महाप्रपञ्चं दर्शयति—एतेषामिति। व्यष्टिभूतानामिति शेषः। तत्र दृष्टान्तमाह—यथावान्तरेति। अवान्तरवनानाम्=धवखदिरपलाशाद्यवान्तरवनानामित्यर्थः। समष्टिः=समुदायः, यथावाऽवान्तरजलाशयानाम्=वापीकूपतडागाद्यवान्तरजलाशयानाम्, एतदुपहितम्=अवान्तरमहाप्रपञ्चोपहितमित्यर्थः। चैतन्यप्रपञ्चयोर्भेदं "सर्वं खल्विदं ब्रह्मे"ति श्रुतिविरोधं परिहरति–आभ्यामिति सुबोधिनीकारः। अविविक्तम्=यद्वस्तु श्रुतं तदवच्छिन्नं चैतन्यं, सर्वं खल्विदं ब्रह्मेति वाक्यस्य वाच्यं भवति, विविक्तं विवेकेन पृथक्कृत्य निश्चितं सल्लक्ष्यं भवतीत्यर्थः। सम्प्रत्यध्यारोपप्रकरणमुपसंहरति–एवमिति। वस्तुनि=ईश्वरचैतन्ये, तत्पदवाच्ये अज्ञानाद्यवस्त्वारोपोऽध्यारोपः प्रदर्शितः॥ १८॥

इदानीम्=सामान्यतोऽध्यारोपनिरूपणानन्तरं त्वंपदार्थे विशेषत उच्यतइत्यनु

उच्यते । अतिप्राकृतस्तु "आत्मा वै जायते पुत्र" इत्यादिश्रुतेः स्वस्मिन्निव पुत्रेऽपि प्रेमदर्शनात्पुत्रे पुष्टे नष्टे चाहमेव पुष्टो नष्टश्चेत्याद्यनुभवाच्च पुत्र आत्मेति वदति । चार्वाकस्तु "स वा एष पुरुषोऽन्नरसमय" इत्यादिश्रुतेः प्रदीप्तगृहात्स्वपुत्रं परित्यज्यापि स्वस्य निर्गमदर्शनात्स्थूलोऽहं कृशोऽहमित्याद्यनुभवाच्च स्थूलशरीरमात्मेति वदति । अपरश्चार्वाकः "ते ह प्राणाः प्रजापतिमेत्य ब्रूयुः" इत्यादिश्रुतेरिन्द्रियाणामभावे शरीरचलनाभावात्काणोऽहं बधिरोऽहमित्याद्यनुभवाच्चेन्द्रियाण्यात्मेति वदति । अपरश्चार्वाकः "अन्योऽन्तर आत्मा प्राण-

---

पञ्चः । इदम्=अपत्यादिकमेवाऽहम्, अयं पुत्र एवाहमिति स्थूलबुद्धिरात्मन्यध्यारोपयति । अत्र कौषीतकी श्रुतिमाह—"आत्मा वै जायते पुत्र इति । पुन्नाम्नो नरकात्त्रायते इति पुत्रः, पंक्ति विंशति सूत्रे 'न पतन्त्यनेन पितर इति महाभाष्यम् । नानेनपततीति निरुक्तम् । अत्र बहुप्रपञ्चितमस्माभिर्महाभाष्यनिरुक्तटीकयोः तत्तत्रैवकणेहस्यनिरीक्षणीयम् । आदिना "आत्मावैपुत्रनामासि त्वं जीव शरदः शतमित्यादि श्रुतिसंग्रहः । तत्र युक्तिमाह—स्वस्मिन्निवेति । स्वशरीर इव पुत्रशरीरेऽपि प्रेमदर्शनादात्मत्वभ्रम इति सारम् । वदति=अतिप्राकृत इत्यनुषज्यते । 'एक आत्मनः शरीरे भावादिति ब्रह्मसूत्रान्मतान्तराण्याह—चार्वाकस्तु इति । स्थूलशरीरमात्मेति वदतीत्यन्वयः । चारुर्लोकसम्मतोवाक्योवाक्यं यस्यस चार्वाकः । अत्रापि तैत्तिरीयश्रुतिमाह—सवेति । पुरुषशब्दस्य श्रुतावन्नरसमयदेहे प्रयुक्तत्वाद्देह आत्मेति गम्यत इति श्रुत्यभिप्रायः । प्रदीप्तगृहात्=अग्निज्वालाप्रदीप्तगृहादित्यर्थः । परित्यज्यापि=मन्त्रैवेति शेषः । निर्गमदर्शनादिति । तथा च पुत्रादपि अधिकतरास्वदेहे प्रीतिर्दृश्यते इति युक्त्यर्थः । स्थूलदेहस्यात्मत्वेऽनुभवं प्रमाणयति—स्थूलोऽहमिति । अहम्प्रत्यय आत्माऽवगाहीत्यर्थः । अपरश्चार्वाकः=इन्द्रियाण्यात्मेति वदति । तेहप्राणाः=इन्द्रियाणि, स्पष्टमन्यत् । 'अन्योऽन्तर आत्मेति । अन्नमयादित्यर्थः । प्राणाभावे=

मय" इत्यादिश्रुतेः प्राणाभाव इन्द्रियादिचलनायोगादहमशनायावानहं पिपासावानित्याद्यनुभवाच्च प्राण आत्मेति वदति। अन्यस्तु चार्वाकः "अन्योऽन्तर आत्मा मनोमय" इत्यादिश्रुतेर्मनसि सुप्ते प्राणादेरभावादहं सङ्कल्पवानहं विकल्पवानित्याद्यनुभवाच्च मन आत्मेति वदति। बौद्धस्तु "अन्योऽन्तर आत्मा विज्ञानमय" इत्यादिश्रुतेः कर्त्तुरभावे करणस्य शक्त्यभावादहं कर्त्ताहं भोक्तेत्याद्यनुभवाच्च बुद्धिरात्मेति वदति। प्राभाकरतार्किकौ तु "अन्योऽन्तर आत्मानन्दमय" इत्यादि-

---

मरणकाले, इन्द्रियचलनायोगादिति। तथाचोपजीव्यत्वात्प्राणस्यैवात्मत्वमित्यापदेवः। किंचेन्द्रियाणामात्मत्वे चक्षुराद्युपघाते कथं स्मृतिरनुभवितुरभावात्। अन्यदृष्टस्यान्येन स्मरणासम्भवात्। 'नान्यदृष्टं स्मरत्यन्य इति न्यायकुसुमाञ्जल्युक्तेरिति कुरुक्षेत्रीयाः। अशनायावान्=बुभुक्षावान्, पातुमिच्छा पिपासा, अशनायापिपासे प्राणधर्मौ स्पष्टमन्यत्। अन्यस्तु चार्वाकः—मन आत्मेति वदतीत्यन्वयः। अन्योऽन्तर आत्मेति। प्राणमयादित्यर्थः। आदिपदेन—'मन एव मनुष्याणां कारणं बन्धमोक्षयो'रिति श्रुतिसंग्रहः। मनसि=मूर्च्छादाविति शेषः। सुप्ते=विलीने, प्राणादेरभावात्=प्राणप्रवृत्तेर्मनोऽधीनत्वाच्च, तदुक्तं पञ्चपादिकाविवरणे—'मनोऽधीनतादर्शनात्प्राणप्रवृत्तेरिति। अत उपजीव्यत्वान्मनस एवात्मत्वमित्यापदेवः। मनसश्च संकल्पादिधर्मत्वमाबालवृद्ध प्रसिद्धमित्यनुभवोक्तिः स्पष्टार्था। क्षणिकविज्ञानवादिनं बौद्धमतमुत्थापयति—बौद्धस्त्विति। मनोमयादन्योऽन्तर आत्मा विज्ञानमय=क्षणिकविज्ञानमयो विज्ञानमूलत्वान्मनस इति बौद्धाभिप्रायः। करणस्य=सुखादिज्ञानकरणत्वेन मनसः करणत्वाऽनुमानम्। तदतिरिक्तस्य कर्तुरदर्शनाद्बुद्धिरात्मेति भावः। प्रपञ्चितं चैतदस्माभिर्न्यायसिद्धान्तमुक्तावलीटीकायां न्यायसूत्रवृत्तौ च विस्तरतः। प्राभाकरतार्किकौ तु अज्ञानमात्मेति वदत इत्यनुषज्यते। अज्ञानं=क्षणिकविज्ञानादन्यद् ज्ञानाधिकरणं द्रव्यरूपमात्मतत्त्वमिति मनोरञ्जनीकारः। विज्ञानादन्य आत्मनि तैत्तिरीयक श्रुतिं प्रमाणयति-अन्योऽन्तर आत्मेति।

श्रुतेर्बुद्ध्यादीनामज्ञाने लयदर्शनादहमज्ञोऽहमज्ञानीत्याद्यनुभवाच्चाज्ञानमात्मेति वदतः । भाट्टस्तु "प्रज्ञानघन एवानन्दमय" इत्यादिश्रुतेः सुषुप्तौ प्रकाशाप्रकाशसद्भावान्मामहं न जानामीत्याद्यनुभवाच्चाज्ञानोपहितं चैतन्यमात्मेति वदति । अपरो बौद्धः "असदेवेदमग्र आसीत्" इत्यादिश्रुतेः सुषुप्तौ सर्वाभावादहं सुषुप्तौ नासमित्युत्थितस्य स्वाभावपरामर्शविषयानुभवाच्च शून्यमात्मेति वदति ॥ १९ ॥

एतेषां पुत्रादीनामनात्मत्वमुच्यते । एतैरतिप्राकृतादिवादिभिरुक्तेषु श्रुतियुक्त्यनुभवाभासेषु पूर्वपूर्वोक्तश्रुतियुक्त्यनुभवाभासानामुत्तरोत्तरश्रुतियुक्त्यनुभवाभासैरात्मत्वबाधदर्शनात्पुत्रादीनामनात्मत्वं स्पष्टमेव । किञ्च प्रत्यगस्थूलोऽचक्षुरप्रा-

---

विज्ञानमयादानन्दमयोऽन्य इति यावत् । अत्र "आनन्दमयोऽभ्यासादिति ब्रह्मसूत्रशाङ्करभाष्ये बहूक्तं मया च ब्रह्मसूत्रवृत्तौ तत्रैव द्रष्टव्यम् । बुद्ध्यादीनां=बुद्धिसुखदुःखेच्छादीनाम् ; अज्ञाने=ज्ञानभिन्ने आत्मनि, लयदर्शनात्=अभावदर्शनादित्यर्थः । अनुभवमाह—अहमज्ञ इति । अहमज्ञो ज्ञानरहितोऽज्ञानीत्यनुभवो ज्ञानात्मनोर्भेदं द्रढयतीति तयोराशयः । मतान्तरमाह—भाट्टस्त्विति । अज्ञानोपहितं चैतन्यमात्मेति वदतीत्यनुषज्यते । तत्र माण्डूक्यश्रुतिं प्रमाणयति—प्रज्ञानघन इति । प्रज्ञानैकरस इत्यर्थः । युक्तिमाह—सुषुप्तौ प्रकाशाप्रकाशसद्भावादिति । उत्थितस्य सुखमहमस्वाप्समिति, न किञ्चिदवेदिषमिति च परामर्शादित्यर्थः । माध्यमिकमतमाह—अपरो बौद्ध इति । शून्यमात्मेति वदतीत्यनुषज्यते । असदेवेदमग्र आसीदिति । प्रागुत्पत्तेरिदं नामरूपात्मकं जगत् शून्यमेवासीदिति श्रुत्यर्थः । अहं सुषुप्तौ नासम्=नाभूवम् , उत्थितस्य=पुंसः, स्वाभावेति । स्वस्याभावेत्यर्थः ॥ १९ ॥

अनात्मत्वम=आत्मभिन्नत्वम् , उच्यते=कथ्यते श्रुतियुक्त्यनुभवाभासेषु=श्रुत्याभासेषु युक्त्याभासेषु अनुभवाभासेष्वित्यर्थः । द्वन्द्वान्ते श्रूयमाणपद

णोऽमना अकर्त्ता चैतन्यं चिन्मात्रं सदित्यादिप्रबलश्रुतिविरोधादस्य पुत्रादिशून्यपर्यन्तस्य जडस्य चैतन्यभास्यत्वेन घटादिवदनित्यत्वादहं ब्रह्मेति विद्वदनुभवप्राबल्याच्च तत्तच्छ्रुतियुक्त्यनुभवाभासानां बाधितत्वादपि पुत्रादिशून्यपर्यन्तमखिलमनात्मैव । अतस्तत्तद्भासकं नित्यशुद्धबुद्धमुक्तसत्यस्वभावं प्रत्यक्चैतन्यमेवात्मवस्त्विति वेदान्तविद्वदनुभवः । एवमध्यारोपः ॥ २० ॥

अपवादो नाम रज्जुविवर्त्तस्य सर्पस्य रज्जुमात्रत्ववद्वस्तुविवर्त्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम् । तदुक्तम् ।

"सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः ।
अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदीरित" इति ॥

---

प्रत्येकमभिसंबन्ध्यत इति न्यायात् । प्रकारान्तरेणपुत्रादीनामनात्मत्वमाह—किंचेति । प्रत्यगादिविशेषणैः पूर्वोक्तानां सर्वेषामनात्मत्वं सूचितम् । अनित्यत्वात्=अनित्यत्वानुमानात् । तत्तदिति—पूर्वोक्तेत्यर्थः । अतः=पुत्रादीनामनात्मत्वात्, तत्तद्भासकम्=पुत्रादिभासकम्, प्रत्यक्चैतन्यं=सर्वान्तरचैतन्यमेव आत्मवस्तु=आत्मपदार्थः । अथोपसंहार एवमिति । हेतुहेतुमद्भावसंगत्याऽध्यारोपनिरूपणानन्तरमपवादं निरूपयति—अपवादो नामेति । अवस्तुभूतस्य वस्त्वात्मनापदेशोऽपवाद इत्यापदेवः । तस्यानुसंधानग्रन्थे स्वधिष्ठाने भ्रान्त्या प्रतीतस्य तद्व्यतिरेकेणाभावनिश्चयोऽपवाद इत्युक्तम् । शुक्त्यादौ भ्रान्त्या प्रतीतस्य रजतादेः शुक्तिव्यतिरेकेणाभावनिश्चय इति तदर्थः । अयमेव बाध इत्युच्यते । स च त्रिविध इत्यन्यत्र विस्तरः । तत्र लौकिकदृष्टान्तमाह—रज्जुविवर्तस्य=सर्पाकारेणभासमानस्यापवादो बाधो रज्जुमात्रतयावस्थानवत्=चैतन्यविवर्तस्याज्ञानादिप्रपञ्चस्य बाधश्चिन्मात्रत्वेनावस्थानमपवादः । वस्तुविवर्तस्य=चैतन्यविवर्तस्य, वस्तुमात्रत्वम्=चैतन्यमात्रत्वमित्यर्थः । अस्मिन्नर्थे मिश्राणां सम्मतिमाह—तदुक्तमिति । सतत्वतः=यथार्थतः अन्यथाप्रथा=स्वरूपान्तरापत्तिर्यथा दुग्धस्य दध्याकारेणपरिणामो विकारः । अतत्वतः=स्वरूपान्तरेण,

तथाहि । एतद्भोगायतनं चतुर्विधसकलस्थूलशरीरजातं भोग्यरूपान्नपानादिकमेतदायतनभूतभूरादिचतुर्दशभुवनान्येतदायतनभूतं ब्रह्माण्डं चैतत्सर्वमेतेषां कारणरूपं पञ्चीकृतभूतमात्रं भवति । एतानि शब्दादिविषयसहितानि पञ्चीकृतानि भूतानि सूक्ष्मशरीरजातं चैतत्सर्वमेतेषां कारणरूपापञ्चीकृतभूतमात्रं भवति । एतानि सत्त्वादिगुणसहितान्यपञ्चीकृतान्युत्पत्तिव्युत्क्रमेणैतत्कारणभूताज्ञानोपहितचैतन्यमात्रं भवति । एतदज्ञानमज्ञानोपहितं चैतन्यं चेश्वरादिकमेतदाधारभूतानुपहितचैतन्यरूपं तुरीयं ब्रह्ममात्रं भवति ॥ २१ ॥

आभ्यामध्यारोपापवादाभ्यां तत्त्वम्पदार्थशोधनमपि सिद्धं

---

अन्यथाप्रथा=मिथ्याप्रतीतिर्विवर्तभावो यथा रज्जुसर्पः। अयमेव विवर्तवादोऽद्वैतब्रह्मवादिनां वेदान्तिनां पक्षः । सांख्यादिपक्षः परिणामवादो वेदान्तपक्षस्तु विवर्तवाद इत्यभियुक्तवचनात् । इदानीमपवादं वितत्य प्रतिपादयितुमाह–तथाहीति । एतत्सर्वमित्युक्तसमस्तसंग्रहार्थः । यथाघटोमृत्स्वरूपः तत्कार्यत्वात्तथैतदपीत्यर्थः । एतेषामित्यस्यापि स एवार्थः । पञ्चीकृतभूतमात्रं भवति=अर्थात्–स्थूलशरीरमारभ्य ब्रह्माण्डपर्यन्तस्य सर्वस्यापि पञ्चीकृतभूतकार्यत्वात्तस्य पञ्चीकृतभूतेषु विलापनमिति भावः । कारणरूपापञ्चीकृतेति । स्वकारणेष्वपञ्चीकृतभूतेषु लीनानि भवन्ति । उत्पत्तिव्युत्क्रमेणेति । पृथिवीजलमात्रं जलं तेजोमात्रं तेजोवायुमात्रं वायुराकाशमात्रमित्यर्थः । अधिकं विष्णुपुराणे द्रष्टव्यम् । एतत्कारणेति । स्वकारणाज्ञानोपहितचैतन्ये अपञ्चीकृतानि लीनानि भवन्ति । तच्चाज्ञानं तदुपहितचैतन्यं सर्वज्ञत्वादिगुणविशिष्टं च स्वाधारभूतानुपहितचैतन्ये लीनं भवति । चैतन्यमेवावशिष्यत इति सुबोधिनीकाराशयः ॥ २१ ॥

अध्यारोपापवादनिर्णयफलितमाह–आभ्यामिति । तत्त्वं पदार्थशोधनमपीति । "तत्त्वमसि श्वेतकेतो" इति महावाक्यार्थघटकतत्पदार्थशोधनं, त्वं पदार्थशोधनमपीत्यर्थः । तत्त्वंपदयोः प्रत्येकं वाच्यं लक्ष्यं चार्थं विभज्य दर्श-

भवति । तथाहि । अज्ञानादिसमष्टिरेतदुपहितं सर्वज्ञत्वादिविशिष्टं चैतन्यमेतदनुपहितं चैतन्यत्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं तत्पदवाच्यार्थो भवति । एतदुपाध्युपहिताधारभूतमनुपहितं चैतन्यं तत्पदलक्ष्यार्थो भवति। अज्ञानादिव्यष्टिरेतदुपहितालपज्ञत्वादिविशिष्टचैतन्यमेतदनुपहितं चैतन्यत्रयं तप्तायः पिण्डवदेकत्वेनावभासमानं त्वम्पदवाच्यार्थो भवति। एतदुपाध्युपहिताधारभूतमनुपहितं प्रत्यगानन्दरूपं तुरीयं चैतन्यं त्वम्पदलक्ष्यार्थो भवति ॥ २२ ॥

अथ महावाक्यार्थो वर्ण्यते । इदं तत्त्वमसिवाक्यं सम्बन्धत्रयणाखण्डार्थबोधकं भवति । सम्बन्धत्रयं नाम पदयोः सामानाधिकरण्यं पदार्थयोर्विशेषणविशेष्यभावः प्रत्यगात्मलक्षणयोर्लक्ष्यलक्षणभावश्चेति । तदुक्तम् ।

"सामानाधिकरण्यं च विशेषणविशेष्यता ।
लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम्" ॥ इति

---

यति—तथाहीत्यादिना । अज्ञानादिसमष्टि—स्थूलसूक्ष्मसमष्ट्यज्ञानमित्यर्थः । एतदुपहितं=ईश्वरचैतन्यं, तस्यतत्पदवाच्यत्वात् । तदुभयाश्रयमनुपहितं चिन्मात्रमित्येतत्त्रयं तप्तायः पिण्डवदविविक्तं तत्पदवाच्यार्थो भवति । एतदुपाध्युपहिताधारभूतम्=एतदुपाध्यधिष्ठानभूतमनुपहितं प्रत्यक्चैतन्यं तत्पदलक्ष्यार्थो भवति । त्वंपदवाच्यार्थमाह—अज्ञानादिव्यष्टिरिति । आदिपदात्सूक्ष्मशरीरं स्थूलशरीरञ्चगृह्यते । एतदनुपहितं—प्रत्यक्चैतन्यम्, शिष्टमुक्तरीत्यास्पष्टम् ॥ २२ ॥

वाक्यार्थबुद्धौपदार्थज्ञानस्यहेतुत्वात्पदार्थमभिधाय वाक्यार्थमाह—अथेति । सम्बन्धत्रयेणेति—सम्बन्धत्रयेणसहितं लक्षणयाऽखण्डार्थबोधकमित्यर्थः । अखण्डार्थं च द्विविधं तत्पदार्थनिष्ठं त्वंपदार्थनिष्ठं चेत्यद्वैतसिद्धौबहुद्रष्टव्यम् । सम्बन्धत्रयं नामेत्यत्रनामप्रसिद्धौ । अत्रविभागेनैष्कर्म्यसिद्धिवचनं संवादयति—तदुक्तमिति । पदार्थप्रत्यगात्मनामिति । पदंचार्थश्चप्रत्यगात्माच तेषामित्यर्थः । स्पष्टमन्यत । सामानाधिकरण्येति । तल्लक्षणन्तु—भिन्नप्रवृत्ति-

सामानाधिकरण्यसम्बन्धस्तावद्यथा सोऽयं देवदत्त इत्यस्मिन्वाक्ये तत्कालविशिष्टदेवदत्तवाचकसशब्दस्यैतत्कालविशिष्टदेवदत्तवाचकायंशब्दस्य चैकस्मिन्पिण्डे तात्पर्यसम्बन्धः। तथा च तत्त्वमसीति वाक्येऽपि परोक्षत्वादिविशिष्टचैतन्यवाचकतत्पदस्यापरोक्षत्वादिविशिष्टचैतन्यवाचकत्वम्पदस्य चैकस्मिंश्चैतन्ये तात्पर्यसम्बन्धः । विशेषणविशेष्यभावसम्बन्धस्तु यथा तत्रैव वाक्ये सशब्दार्थतत्कालविशिष्टदेवदत्तस्यायं शब्दार्थैतत्कालविशिष्टदेवदत्तस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावः । तथात्रापि वाक्ये तत्पदार्थपरोक्षत्वादिविशिष्ट-

---

निमित्तयोः शब्दयोरेकस्मिन्नर्थेप्रवृत्तिरिति ॥ 'सोऽयं देवदत्त' इत्यत्र सोऽयं शब्दयोस्तत्कालतद्देशविशिष्टैतत्कालैतद्देशविशिष्टेतिभिन्नप्रवृत्तिनिमित्तयोरेकस्मिन्देवदत्तपिण्डेतात्पर्यसम्बन्धः सामानाधिकरण्यमित्यर्थः । तत्त्वमसीतिवाक्येऽपि पदयोः सामानाधिकरण्यं संघटयितुमाह—तथाचेति । अयं तथाचेति पाठः सुबोधिनीकारनृसिंहसरस्वतीसम्मतः । आपदेवस्तु तथेत्येत्रपपाठ । शिवदत्तो गङ्गायां तथात्रेतिपठति । रामतीर्थस्तु मनोरञ्जनाकारस्तोर्थत्वादेवात्रविरराम । अस्माभिस्तु कुरुक्षेत्रीयैः सरस्वत्येवबहुमने । तत्त्वमसिवाक्येपरोक्षत्वपर्यंज्ञत्वादिविशिष्टचैतन्यं तत्पदप्रवृत्तिनिमित्तम् । अपरोक्षत्वकिञ्चिज्ज्ञत्वादिवैशिष्टयंत्वम्पदप्रवृत्तिनिमित्तम् । तथाच भिन्नप्रवृत्तिनिमित्तयोस्तत्त्वंपदयोरेकस्मिंश्चैतन्येतात्पर्यसम्बन्धः सामानाधिकरण्यमितिप्रकृतवाक्येलक्षणसमन्वयः । पदार्थयोर्विशेषण विशेष्यभावसम्बन्धं सदृष्टान्तमाह—विशेषणेति । विशेषणं भेदकं विशेष्यं भेद्यमिति च—"विशेषणं विशेष्येणबहुलमिति पाणिनीयसूत्रगसिद्धान्तकौमुदीप्रकाशे सम्यक् प्रतिपादितमस्माभिर्विस्तरभियाविरम्यते । तत्रैव वाक्य='सोऽयं देवदत्त इति वाक्ये, अन्योन्यभेदव्यावर्तकतया=अन्योन्यभेदाभाववत्तयेत्यर्थः । विशेषणविशेष्यभावं दार्ष्टान्तिके योजयति—तथात्रापीति । वाक्ये=तत्त्वमसिवाक्ये, तत्त्वं पदार्थयोर्विशेषण-

चैतन्यस्य त्वम्पदार्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावः। लक्ष्यलक्षणसम्बन्धस्तु यथा तत्रैव सशब्दायंशब्दयोस्तदर्थयोर्वा विरुद्धतत्कालैतत्कालविशिष्टत्वपरित्यागेनाविरुद्धदेवदत्तेन सह लक्ष्यलक्षणभावः। तथात्रापि वाक्ये तत्त्वम्पयोस्तदर्थयोर्वा विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्वपरित्यागेनाविरुद्धचैतन्येन सह लक्ष्यलक्षणभावः। इयमेव भागलक्षणेत्युच्यते ॥ २३ ॥

अस्मिन्वाक्ये नीलमुत्पलमिति वाक्यवद्वाक्यार्थो न सङ्गच्छते। तत्र तु नीलपदार्थनीलगुणस्योत्पलपदार्थोत्पलद्रव्यस्य च शौक्ल्यपटादिभेदव्यावर्त्तकतयान्योन्यविशेषणविशेष्यभाव-

---

विशेष्यभावो बोध्यः। सम्प्रति क्रमप्राप्तं लक्ष्यलक्षणसम्बन्धमाह—लक्ष्येति। यथा तत्रैव='सोऽयं देवदत्त इत्यत्र वाक्य एव, सोऽयं शब्दयोस्तदर्थयोर्वाऽविरुद्धदेवदत्तत्वविशिष्टदेवदत्तपिण्डेन सह देवदत्तत्वविशिष्टदेवदत्तवाचकशब्दस्य लक्ष्यलक्षणभावसम्बन्ध इत्यर्थः। तथात्रापि वाक्ये=तत्वमसीतिवाक्ये, त्यक्तसर्वज्ञत्वाल्पज्ञत्वरूपविरुद्धांशयोस्तत्त्वंपदयोस्तदर्थयोर्वालक्षणस्वमखण्डचैतन्यस्य लक्ष्यत्वमिति भावः। इयमेव=जहदजहल्लक्षणैव, भागलक्षणेत्युच्यते=संज्ञाभेदोनवस्तुभेद इति भावः। तदुक्तमभियुक्तैः—तत्वमस्यादिवाक्येच लक्षणाभागलक्षणा इति। तत्वमस्यादिवाक्यानां विरुद्धांशपरित्यागेनाविरुद्धचैतन्य मात्रबोधकत्वमेवभागलक्षणंत्युच्यत इति सुबोधिनीकारः॥

अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते, 'शक्यसम्बन्धोलक्षणेति' मीमांसकतार्किकमतद्वयाभिप्रायेण तत्त्वंपदयोस्तदर्थयोर्वेत्युक्तम् ॥ २३ ॥

अस्मिन्वाक्ये=तत्वमसीतिमहावाक्ये, नीलमुत्पलमिव संसर्गो वा विशिष्टो वा वाक्यार्थो न संगच्छते=अखण्डार्थत्वस्य विवक्षितत्वादिति भावः। तत्र तु=नीलमुत्पलमिति वाक्येतु, शौक्ल्यपटादिभेदव्यावर्त्तकतया=नीलपदार्थनीलगुणस्य शौक्ल्यादिव्यावर्तकतयोत्पलस्य च पटादि-

संसर्गस्यान्यतरविशिष्टस्यान्यतरस्य तदैक्यस्य वा वाक्यार्थत्वाङ्गीकारे प्रमाणान्तरविरोधाभावात्तद्वाक्यार्थः सङ्गच्छते। अत्र तु तदर्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वमर्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावसंसर्गस्यान्यतरविशिष्टस्यान्यतरस्य तदैक्यस्य च वाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणविरोधाद्वाक्यार्थो न सङ्गच्छते। तदुक्तं।

"संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र सम्मतः।
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मत" इति ॥ २४ ॥

अत्र गङ्गायां घोषः प्रतिवसतीतिवाक्यवज्जहल्लक्षणापि न सङ्गच्छते। तत्र तु गङ्गाघोषयोराधाराधेयभावलक्षणस्य वाक्या-

---

व्यावर्तकतयेत्यर्थः। अन्यतरविशिष्टस्यान्यतरस्य=नीलगुणविशिष्टस्योत्पलपदार्थस्य, तदैक्यस्य च=नीलगुणविशिष्टोत्पलयोरैक्यस्यवेत्यर्थः। ऐक्यं च=भेदाघटितत्वम्। प्रमाणान्तरेति। प्रत्यक्षादिप्रमाणविरोधाभावादभेदलक्षणोवाक्यार्थः संगच्छत इति भावः। अत्र तु=तत्वमसीति महावाक्येतु, तत्त्वंपदवाच्ययोः ईश्वरजीवचैतन्ययोरुभयोरपि द्रव्यत्वाद्गुणगुणिभावः। अतोऽभेदसम्बन्धेनान्वयासम्भवादखण्डार्थकत्वमितिवैषम्यम्। अत्रवृद्धसम्मतिमाह—तदुक्तमिति। वाक्यवृत्ताविविशेषः। संसर्गस्य वा विशिष्टस्यवा विशिष्टैक्यस्यवा प्रत्यक्षादिविरुद्धत्वेनतत्वमस्यादि वाक्यार्थं प्रति पात्रत्वायोगादत्रसम्भवः। एतदभिप्रेत्यैववाक्यवृत्तौभाष्यकारैरुक्तम्—"तत्वमस्यादिवाक्यं च तादात्म्यप्रतिपादने। लक्ष्यौतत्त्वंपदार्थौ द्वावुपादायप्रवर्तते॥ तत्रदात्म्यप्रतिपादनेऽखण्डस्वरूपप्रतिपादने, "असंसर्गिसत्यार्थतास्यात्पदानाम नन्यार्थतावाप्यखण्डार्थतात्र" इत्यादिनाऽस्वाराज्यसिद्धौवप्युक्तम् ॥ २४ ॥

तत्वमसीतिवाक्येजहल्लक्षणानसंगच्छत इत्यन्वयः। तदेव दर्शयितुञ्जहल्लक्षणाया उदाहरणन्तावदाह—गङ्गायामिति। तात्पर्यानुपपत्तिश्चलक्षणाबीजम्। अधिकंव्याकरणमञ्जूषायां वेदान्तपरिभाषायां च, घोषः=आभीरग्रामः, तत्र

र्थस्याशेषतो विरुद्धत्वाद्वाक्यार्थमशेषतः परित्यज्य तत्सम्बन्धितीरलक्षणाया युक्तत्वाज्जहल्लक्षणा सङ्गच्छते। अत्र तु परोक्षापरोक्षचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य भागमात्रे विरोधाद्भागान्तरमपि परित्यज्यान्यलक्षणाया अयुक्तत्वाज्जहल्लक्षणा न सङ्गच्छते। न च गङ्गापदं स्वार्थपरित्यागेन तीरपदार्थं यथा लक्षयति तथा तत्पदं त्वम्पदं वा स्वार्थपरित्यागेन त्वम्पदार्थं तत्पदार्थं वा लक्षयत्वतः कुतो जहल्लक्षणा न सङ्गच्छत इति वाच्यम्। तत्र तीरपदाश्रवणेन तदर्थाप्रतीतौ लक्षणया तत्प्रतीत्यपेक्षायामपि तत्त्वम्पदयोः श्रूयमाणत्वेन तदर्थप्रतीतौ लक्षणया पुनरन्यतरपदेनान्यतरपदार्थप्रतीत्यपेक्षाभावात् ॥ २५ ॥

---

तु=गङ्गायांघोषइत्यादौ तु, गङ्गाघोषयोः=प्रवाह–घोषयोः, आधाराधेयभाव लक्षणस्य=गङ्गानिष्ठाधारतानिरूपित घोषनिष्ठाधेयतारूपस्येत्यर्थः। अशेषतः= सर्वथा, तत्सम्बन्धीति। गङ्गासम्बन्धीत्यर्थः। अत्रतु=तत्त्वमसीति वाक्ये तु, भागमात्रे=परोक्षापरोक्षत्वमात्रे, अल्पज्ञत्व सर्वज्ञत्वयोर्वा, विरोधात्=विरोधदर्शनात्, भागान्तरमपि=चैतन्यमपीत्यर्थः। परित्यज्य, अन्यलक्षणायाः= अन्यस्मिन्पदार्थेलक्षणायाः, अयुक्तत्वात्=अयोग्यत्वात्, जहल्लक्षणा= जहत्स्वार्थलक्षणेत्यर्थः। नसंगच्छते=नयुज्यते, शंकते=नचेति। स्वार्थपरित्यागेन, प्रवाहरूपमुख्यार्थं बाधेन, "मुख्यार्थबाधेतद्योगे रूढितोथ प्रयोजनादिति काव्यप्रकाशोक्तेः। तीरपदार्थम्=मुख्यार्थतावच्छेदकातिरिक्तधर्मावच्छिन्नम्, यथालक्षयति तथा=तद्वदित्यर्थः। तत्त्वमसीति वाक्ये तत्पदं स्वार्थपरित्यागेन=परोक्षत्वादिविशिष्टं स्वार्थं परित्यज्य, जीव चैतन्यं लक्षयतु, एवं त्वम्पदमपि किञ्चिज्ज्ञत्वादि विशिष्टं परित्यज्येश्वरचैतन्यं वा लक्षयत्वित्यर्थः। निराकरोति–तत्रेति। गङ्गायां घोष इत्यत्र। तदर्थाप्रतीतौ=तीरपदार्थाप्रतीतौ, तत्प्रतीत्यपेक्षायाम्=तदर्थप्रतीत्यपेक्षायामित्यर्थः। अन्यतरपदेनेति। तत्पदेन-त्वम्पदार्थप्रतीत्यपेक्षाभावात्, त्वं पदेनतत्पदार्थं प्रतीत्यपेक्षाभावादित्यर्थः। पदात्पदार्थप्रज्ञयेलक्षणाया अनुपयोग इति भावः ॥ २५ ॥

[अत्र शोणो धावतीतिवाक्यवदजहल्लक्षणापि न सम्भवति । तत्र शोणगुणगमनलक्षणस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तदाश्रयाश्वादिलक्षणया तद्विरोधपरिहारसम्भवादजहल्लक्षणा सम्भवति । अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तत्सम्बन्धिनो यस्यकस्यचिदर्थस्य लक्षितत्वेऽपि तद्विरोधपरिहारासम्भवादजहल्लक्षणा न सम्भवत्येव । न च तत्पदं त्वम्पदं वा स्वार्थविरुद्धांशपरित्यागेनांशान्तरसहितं त्वम्पदार्थं तत्पदार्थं वा लक्षयत्वतः कथं प्रकारान्तरेण भागलक्षणाङ्गीकरणमिति वाच्यम् । एकेन पदेन स्वार्थांशपदार्थान्तरोभयलक्षणाया असम्भवात्पदान्तरेण तदर्थप्रतीतौ लक्षणया पुनस्तत्प्रतीत्यपेक्षाभावाच्च ॥ २६ ॥

---

अत्र=तत्त्वमसीति वाक्ये, अजहल्लक्षणापि नसंभवति । कुत इत्यत आह—तत्रेति । शोणोधावतीत्यत्रेत्यर्थः । शोणगुणगमनलक्षणस्य=शोणगुणकर्तृकगमनरूपस्य, वाक्यार्थस्यविरुद्धत्वात्=शोणगुणकर्तृकगमनासंभवादिति भावः । तदपरित्यागेन=शोणगुणापरित्यागेन, तदाश्रयेति । शोणगुणाश्रयेत्यर्थः । तद्विरोधपरिहारसंभवात्=वाक्यार्थविरोधपरिहारसंभवात्, अत्र तु=तत्त्वमस्यादिवाक्ये तु, चैतन्यैकत्वस्य=चैतन्यैकत्वलक्षणस्य, वाक्यार्थस्य=मुख्यवाक्यार्थस्य, विरुद्धत्वात्तदपरित्यागेन=परोक्षत्वापरोक्षत्वापरित्यागेन, तत्संबन्धिनः=स्ववाच्यसंबन्धिनः । यस्यकस्यचिदर्थस्य=अनिर्दिष्टविषयार्थान्तरस्य, लक्षितत्वेऽपि तद्विरोधपरिहारासंभवात्=वाच्यार्थयोर्विरोधस्याऽपरिहारादित्यर्थः । अजहल्लक्षणान संभवति=नोपयुज्यत इत्यर्थः । नच तत्पदत्वंपदं वा–स्वार्थविरुद्धांशपरित्यागेन=स्ववाच्ययोर्योविरुद्धांशस्तत्परित्यागेन, अंशान्तरसहितम्=शुद्धचैतन्यसहितम्, त्वम्पदार्थम्=जीवचैतन्यम्, तत्पदार्थम्=ईश्वर चैतन्यम्, लक्षयतुकथंभाग लक्षणा इत्याशंक्य–निराकरोति–एकेनपदेनेति । तत्पदेन त्वंपदेनवेत्यर्थः । स्वार्थांशेति । शुद्धचैतन्येत्यर्थः । पदार्थान्तरेति । तत्पदार्थत्वं पदार्थान्यतरेत्यर्थः । असंभवादिति=

तस्माद्यथा सोऽयं देवदत्त इति वाक्यं तदर्थो वा तत्काले-तत्कालविशिष्टदेवदत्तलक्षणस्य वाक्यार्थस्यांशे विरोधाद्विरुद्ध-तत्कालैतत्कालविशिष्टांशं परित्यज्याविरुद्धं देवदत्तांशमात्रं लक्षयति तथा तत्त्वमसीतिवाक्यं तदर्थो वा परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्यांशे विरोधाद्विरुद्ध-परोक्षत्वापरोक्षत्वविशिष्टांशं परित्यज्याविरुद्धमखण्डचैतन्यमात्रं लक्षयतीति ॥ २७ ॥

अथाधुनाहं ब्रह्मास्मीत्यनुभववाक्यार्थो वर्ण्यते । एवमाचार्येणाध्यारोपापवादपुरःसरं तत्त्वम्पदार्थौ शोधयित्वा वाक्येनाखण्डार्थेऽवबोधितेऽधिकारिणोऽहं नित्यशुद्धबुद्धमुक्तस-

---

सकृदुच्चरितः सकृदर्थं गमयतीति न्यायादित्यस्मिन्नित्र गङ्गाकूपविन्नाशयः । पदान्तरेण=तत्पदेन त्वम्पदेन वा, तदर्थप्रतीतौ=तत्तदर्थप्रत्ययसंभवे, लक्षणया पुनरन्यतरस्यान्यतरप्रतीत्यपेक्षाभावादित्यर्थः ॥ २६ ॥

एवंच तत्त्वमसीति वाक्ये जहदजहल्लक्षणैवस्वीकर्तव्येत्युपसंहरति—तस्मादिति । तत्र दृष्टान्तमाह—यथेति । सोऽयंदेवदत्त इति वाक्यम्=पदद्वयमित्यर्थः । "पदोच्चयोवाक्यमिति साहित्यदर्पणोक्तेः । 'पदसमूहोवाक्यमिति संग्रहोक्तेश्च । वाक्यार्थस्य अंशे=एकरिमन्नंशे, तत्काले-तत्कालवैशिष्ट्यभागे, विरोधात्=विरोधदर्शनात्, तत्परित्यागेन देवदत्तस्वरूपमात्रं लक्षयति, तथा तत्त्वमसिवाक्यं विरुद्धांशपरित्यागेनाखण्ड चैतन्यमात्रं लक्षयतीति ग्रन्थकृतार्थः ॥ २७ ॥

अथ=उपदेशवाक्यार्थनिरूपणानन्तरमित्यर्थः । अनुभववाक्यार्थं इति । अनुभवस्य=ब्रह्मज्ञानस्य साक्षात्कारस्य प्रतिपादकं यद्वाक्यं तस्येत्यर्थ इत्यापदेवः । कश्चिदधिकारी आचार्योपदिष्ट—"अहं ब्रह्मास्मीति" यजुर्वेदवाक्यार्थं मनुस्मरन्स्वात्मानन्दमनुभवतीति निर्गलितोऽर्थ इति कुरुक्षेत्रीयाः । तत्प्रकारमेवाह—एवमाचार्येणेत्यादिना । उपनयनपूर्वकं वेदवेदान्ताध्यापक आचार्य इति गृह्यसूत्रे-हरिहरभाष्यम् । वाक्येन=तत्त्वमसीतिवाक्येन, अखण्डार्थे=अखण्डार्थचैतन्ये,

त्यस्वभावपरमानन्दानन्ताद्वयं ब्रह्मास्मीत्यखण्डाकाराकारिता चित्तवृत्तिरुदेति । सा तु चित्प्रतिबिम्बसहिता सती प्रत्यगभिन्नमज्ञातं परं ब्रह्म विषयीकृत्य तद्गताज्ञानमेव बाधते तदा पटकारणतन्तुदाहे पटदाहवदखिलकारणेऽज्ञाने बाधिते सति तत्कार्यस्याखिलस्य बाधितत्वात्तदन्तर्भूताखण्डाकाराकारिता चित्तवृत्तिरपि बाधिता भवति । तत्र प्रतिबिम्बितं

---

अवबोधिते=ज्ञापितेसतीत्यर्थः । अधिकारिणः=शिष्यस्य, अहं प्रत्यगात्मापरं ब्रह्मास्मीति-अखण्डाकाराकारिता=एकाकारगोचरा, तदुक्तं कल्पतरौ—"एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे" इति,चित्तवृत्तिरुदेति=नाहं संसारी किन्तु नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दानन्ताद्वयं ब्रह्मैवास्मीति तत्त्वज्ञानं जायते इत्यर्थः । परमेषाचित्तवृत्तिर्नसर्वेषां भवति-यदुक्तं खाद्यखण्डने-ईश्वरानुग्रहादेषा पुंसामद्वैत वासना । महाभयकृतत्राणा द्वित्राणामेव जायते ॥ नित्यपदेन ब्रह्मणोऽनित्यत्वशङ्कानिराकृता । अधिकं "नित्यः शुद्धोबुद्धमुक्तस्वभाव इत्यत्र संक्षेपशारीरके द्रष्टव्यम् । पञ्चपादिकायामप्युक्तम्-आनन्दोविषयानुभवोनित्यत्वञ्चेति सन्ति ब्रह्मणोधर्मा इति ॥ एवं शुद्धबुद्धादिपदानामपि तात्पर्यं बोध्यम् । अखण्डाकारचित्तवृत्तेः प्रयोजनमाह—साचिवति । चित्तवृत्तिरित्यर्थः । चित्प्रतिबिम्बसहिता=प्रत्यक् चैतन्यव्याप्तासती, प्रत्यगभिन्नम्-नतु तटस्थमिति भावः । अज्ञातं=प्रमेयं, परंब्रह्म=नतु कार्यब्रह्मेत्यर्थः । विषयीकृत्य=विषयं कृत्वा, तद्गताज्ञानम्=ब्रह्मविषयकाज्ञानं बाधते नतु तत्प्रकाशयतीतिभावः । तत्कार्यस्य=अज्ञानकार्यस्य बाधितत्वात्तदन्तर्भूता=अखिलकार्यान्तर्भूता, चित्तवृत्तिरपि बाधिताभवति । अर्थात्-कारणीभूताज्ञाननाशे-सति तत्कार्यं सकलप्रपञ्चनाशादद्वैतं-सिध्यतीति भावः । तदुक्तं वार्तिके-"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः । अविद्यासहकार्येण नासीदस्ति-भविष्यति ॥ भाष्येऽप्युक्तम्-"अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्धि निर्मलम् । कृत्वाज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥ अत्राधिकं सिद्धान्तलेशे द्रष्टव्यम् ।

चैतन्यमपि यथा दीपप्रभाऽदित्यप्रभावभासनासमर्था सती तयाभिभूता भवति तथा स्वयम्प्रकाशमानप्रत्यगभिन्नपरब्रह्मावभासनानर्हतया तेनाभिभूतं सत्स्वोपाधिभूताखण्डवृत्तेर्बाधितत्वाद्दर्पणाभावे मुखप्रतिबिम्बस्य मुखमात्रत्ववत्प्रत्यगभिन्नपरब्रह्ममात्रं भवति ॥ २८ ॥

एवं च सति "मनसैवानुद्रष्टव्यं" "यन्मनसा न मनुत" इत्यनयोः श्रुत्योरविरोधो वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात् । तदुक्तम् ।

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता" इति ॥

---

तत्र=वृत्तौ, प्रतिबिम्बितं चैतन्यमप्यखण्डचित्तवृत्तेर्बाधितत्वात्प्रत्यगभिन्नं परब्रह्ममात्रं भवतीत्यन्वयः । परिच्छिन्नप्रकाशोऽपरिच्छिन्नं नावभासयतीत्यत्र दृष्टान्तमाह—यथादीपप्रभेति । तया=आदित्यप्रभया, अभिभूता=तिरस्कृता, भवति । एवं परब्रह्मावभासनानर्हतया=स्वप्रकाशात्मावभासनाऽसमर्थतयेत्यर्थः । बाधितत्वात्=नाशात्, दर्पणाभावे=दर्पणविगमे, मुखमात्रत्ववत्=मुखमात्रतावशेषवदित्यर्थः । वृत्तिप्रतिबिम्बितचैतन्यं वृत्तिनाशाच्चैतन्यमात्रत्वेनावशिष्यत इति वेदान्त सिद्धान्तः ॥ २८ ॥

फलितमाह—एवंच सतीति । श्रुत्योः=बृहदारण्यककेनश्रुत्योः । अविरोध =सिद्ध इति शेषः । वृत्तिव्याप्यत्वाङ्गीकारेण=वृत्तिविषयत्वस्वीकारेण, वृत्तिंविनाब्रह्मसाक्षात्कारानुपपत्तिप्रसङ्गात्, फलव्याप्यत्वप्रतिषेधप्रतिपादनात्=फलविषयत्वप्रतिषेधाभिधानादित्यर्थः । प्रयोजनाभावादितिभावः । तदुक्तमिति । पञ्चदश्यामितिशेषः । फलव्याप्यत्वमिति । अस्य=प्रत्यगात्मनः, फलव्याप्यत्वं=फलविषयत्वं, फलंचात्र वृत्तिप्रतिबिम्बितं चैतन्यम्, तद्व्याप्यत्वं शास्त्रकृद्भिर्निराकृतं, तथाचोक्तं विवरणोपन्यासे—"चैतन्याविषयो ब्रह्मवृत्तेस्तु विषयोभवेत्, अतएवाग्रपठितम्—'ब्रह्मण्यज्ञाननाशायवृत्ति-

"स्वयम्प्रकाशमानत्वान्नाभास उपयुज्यते" इति च ॥ जडपदार्थाकाराकारितचित्तवृत्तेर्विशेषोऽस्ति । तथाहि । अयं घट इति घटाकाराकारितचित्तवृत्तिरज्ञातं घटं विषयीकृत्य तद्गताज्ञाननिरसनपुरःसरं स्वगतचिदाभासेन जडं घटमपि भासयति । तदुक्तम्—

"बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेदिति" ॥

यथा दीपप्रभामण्डलमन्धकारगतं घटपटादिकं विषयीकृत्य तद्गतान्धकारनिरसनपुरःसरं स्वप्रभया तदपि भासयतीति ॥ २९ ॥

---

व्याप्तिरपेक्षिता, प्रत्यग्ब्रह्मणोरैक्यस्य तस्या ज्ञानावृतत्वात्तस्याज्ञानस्य नाशाय वृत्तिव्याप्तिरावश्यकी । 'विज्ञातारमरेकेन विजानीयादित्यादिश्रुतेराह—स्वयम्प्रकाशमानत्वान्नाभास उपयुज्यते ॥ स्वस्यैव स्फुरणरूपत्वात्तत्स्फुरणाय चैतन्याभासो नापेक्ष्यत इतिभावः । अग्रेच "कृत्यं ज्ञेयं समाप्तं च ब्रह्मास्मीत्यवबोधने, इति बोध्यम् । अत्राधिकं समन्वयसूत्रशाङ्करभाष्ये, "आत्मानं चेद्विजानीयादयमस्मीतिपुरुष'इति श्रुतौ 'च'द्रष्टव्यम् । एतदेवप्रपञ्चयति—तथाहीति । जडपदार्थविषयिणीं चित्तवृत्तिमभिनीयदर्शयति—अयमिति । अज्ञातम्=वृत्तिसम्बन्धात्प्रागितिशेषः । तद्गताज्ञानेति । घटगताज्ञानेत्यर्थः । स्वगतचिदाभासेन=वृत्तिप्रतिबिम्बितचैतन्याभासेन, जडं घटमपि=जडघटावच्छिन्नं चैतन्यमपीत्यर्थः । भासयति=प्रकाशयति, ज्ञानाज्ञानयोः समानविषयत्वनियमादितिभावः । अस्मिन्नर्थे विद्यारण्यसम्मतिमाह—तदुक्तमिति । पञ्चदश्यामितिशेषः । बुद्धिश्चतत्रबुद्धौप्रतिबिम्बितचिदाभासश्चद्वावेतौ घटं व्याप्नुतः । तत्र=तयोर्मध्ये, धिया=वृत्त्या, अज्ञानं=घटाज्ञानं, नश्येत्, चिदाभासेनतु घटः स्फुरेत्, जडत्वेनस्वतः स्फुरणायोगादितिपद्यार्थः । अत्रानुकूलंदृष्टान्तमाह—यथादीपप्रभामण्डलमिति । अन्धकारगतम्=अन्धकारे-

एवंभूतस्वस्वरूपचैतन्यसाक्षात्कारपर्यन्तं श्रवणमनननिदिध्यासनसमाध्यनुष्ठानस्यापेक्षितत्वात्तेऽपि प्रदर्श्यन्ते । श्रवणं नाम षड्विधलिङ्गैरशेषवेदान्तानामद्वितीयवस्तुनि तात्पर्यावधारणम् । लिङ्गानि तूपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि । प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपपादनमुपक्रमोपसंहारौ । यथा छान्दोग्ये षष्ठाध्याये प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुन "एकमेवाद्वितीयं" इत्यादौ "ऐतदात्म्यमिदं सर्वं" इत्यन्ते च प्रतिपादनम् । प्रकरणप्रतिपाद्यस्य वस्तुनस्तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः । यथा तत्रैवाद्वितीयवस्तुनि मध्ये तत्त्वमसीति नवकृत्वः प्रतिपादनम् ।

---

स्थितम्, तद्वदेति । घटपटादिगतेत्यर्थः । स्वप्रभया=स्वप्रकाशेन, तदपि=घटपटादिकमपीत्यर्थः । भासयति=प्रकाशयति, तद्वदितिभावः ॥ २९ ॥

"श्रवणादिक्रियातावत्कर्तव्येह प्रयत्नत इति सुरेश्वरवचनादाह–तेऽपि=श्रवणादयोऽपि आत्मसाक्षात्कारोपायाः प्रदर्श्यन्ते । तत्रश्रवणस्वलक्षणमाह–षड्विधलिङ्गैरनुपदं वक्ष्यमाणैः, सर्वेषां वेदान्तवाक्यानामद्वितीयब्रह्मणितात्पर्यनिश्चयः श्रवणमित्यर्थः । तानिच लिङ्गानिक्रमेणाह–उपक्रमेति । भट्टपादैः श्लोकवार्तिके एवमुक्तानि—"उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्तीच लिङ्गं तात्पर्यनिर्णये ॥ उपक्रमोपसंहारौ दर्शयति–प्रकरणप्रतिपाद्यस्येति । तदाद्यन्तयोः=प्रकरणाद्यन्तयोः, तदुदाहृत्यदर्शयति—यथेति । 'एकमेवाद्वितीयमित्यारभ्य ऐतदात्म्यमिदं सर्वमिति प्रतिपादनमुपक्रमोपसंहाराविर्त्यथः । उभयोरेकरूप्यमेकलिङ्गत्वसूचनार्थम् । 'आवृत्तिरसकृदुपदेशादितिब्रह्मसूत्रानुसारम् अभ्यासं लक्षयति—प्रकरणेति । तन्मध्ये=प्रकरणमध्ये, पौनः पुन्येन=वारंवारम्, प्रतिपादनम्=कथनमभ्यासः । तमुदाहरति यथेति नवकृत्वः=नववारम्, श्वेतकेतुं प्रतितत्त्वमसीतिवाक्यमुद्दालकेननववारमुक्तमित्यर्थः । अपूर्वतां लक्षयति–प्रकरणेति । उदाहरति–यथेति । तत्रैवछान्दो-

प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः प्रमाणान्तराविषयीकरणमपूर्वता। यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयीकरणम्। फलं तु प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं प्रयोजनम्। यथा तत्र "आचार्यवान्पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य" इत्यद्वितीयवस्तुज्ञानस्य तत्प्राप्तिः प्रयोजनं श्रूयते। प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनमर्थवादः। यथा तत्रैव "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं" इत्यद्वितीयवस्तुप्रशंसनम्। प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिरुपपत्तिः। यथा तत्र "यथा सौम्यैकेन मृत्पि-

---

ण्य एव, मानान्तरेति। श्रुतिभिन्नप्रमाणागोचरत्वमपूर्वतेत्यर्थः। तथा च सूत्रम्—"धर्मब्रह्मणी वेदैकवेद्ये इति। श्रुतिप्रामाण्ये प्रमाणान्तरस्यानपेक्षत्वं—"निरपेक्षोरवः श्रुतिरितिशावरभाष्यात्॥ फलं लक्षयति—फलन्त्विति। उदाहरणमाह—यथेति। आचार्यवान्=गुरुसम्प्रदायवानित्यर्थः। पुरुषो वेद=ब्रह्मसाक्षात्कारं करोति, यदुक्तं—संक्षेपशारीरके—'गुरुचरणसरोजसान्निधानाद्पवित्रयमस्य गुणैकलेशभाज इति॥ तस्य=ब्रह्मसाक्षात्कारवतः, तावदेव-चिरम्=तावत्कालमेवावस्थानम्, यावन्नविमोक्ष्ये=प्रारब्धफलभोगान्नमुच्यते, अथ=भोगेन प्रारब्धक्षये, ब्रह्म सम्पद्यते। तथा च ब्रह्मसूत्रम्—'भोगेनत्वितरे क्षपयित्वाथसम्पद्यते. इतरे=वर्तमानशरीरजनके पुण्यपापे भोगेन=सुखदुःखानुभवेन, क्षपयित्वा=प्रक्षाप्य, स्पष्ट मन्यत्। कश्चित्तु—इतरे ज्ञानिन इति बभ्राम। तत्प्राप्तिः=चैतन्यप्राप्तिः, अर्थवादं लक्षयति—प्रकरणेति। उदाहरति—यथेति। तत्रैव=छान्दोग्यएवेत्यर्थः। उततमादेशमर्थमप्राक्ष्यः=पृष्टवानसि, येनश्रुतेनाश्रुतं श्रुतं भवति, एवमन्यत्। 'सर्वं पदं हस्तिपदेनिमग्नमितिन्यायात्। उपपत्तिं लक्षयति—प्रकरणेति। उदाहरति—यथेति। तत्र=छान्दोग्ये, मृत्पिण्डेन=विज्ञातेनेति शेषः। सर्वम्=घटशरावादिकम्, विकारो

ण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" इत्याद्यद्वितीयवस्तुसाधने विकारस्य वाचारम्भणमात्रत्वे युक्तिः श्रूयते। मननं तु श्रुतस्याद्वितीयवस्तुनो वेदान्तानुगुणयुक्तिभिरनवरतमनुचिन्तनम्। विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहो निदिध्यासनम्। समाधिर्द्विविधः सविकल्पको निर्विकल्पकश्चेति। तत्र

---

नाम धेयं चेति द्वयं=वाचारम्भणमात्रं, सत्यन्तुमृत्तिकैव, इयं श्रुतिः कारणमेव सत्यमाहेति परिमलकारः। अत्राधिकं 'मृत्कयाचिदाकृत्यायुक्तापिण्डोभवतीत्यत्रमहाभाष्ये तद्व्याख्याने च मदीयेद्रष्टव्यम्। एवं च चिद्विवर्तस्य प्रपञ्चस्यचिन्मात्रमेवसत्यम्॥ मननं लक्षयति—मननं त्विति। वेदान्तानुगुणेति। वेदान्ताविरोधीत्यर्थः। तथा च मनुस्मृतौ—"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्तेसधर्मं वेदनेतरः॥ तत्रार्षमृषिप्रोक्तम्। "ऋषयोमन्त्रद्रष्टार इति सिद्धान्त कौमुदीकारः। "ऋषिर्दर्शनादिति निरुक्तात्। यात्तुस्मृतिः श्रुत्या विरुध्यतेसानगृह्यते। यथा 'अनपाकृत्य च ऋण मोक्षमिच्छन्पतत्यध इति स्मृतिः। यदहरेवविरजेत्तदहरेवप्रव्रजेदिति श्रुत्याविरुध्यतेऽतश्चनप्रमाणम्। यथाया—क्रतुविचारस्त्रैवर्णिकानां नियमः, ब्रह्मविचारः पुनः परमहंसस्यैवेतिस्मृतिर्नप्रमाणम्। अस्मत्पूर्वजानां गृहस्थानामपि ब्रह्मविचारदर्शनात्, 'तमेव विदित्वातिमृत्युमेतीति श्रुत्या "कर्मभिर्मृत्युमृषयोनिषेदुःपरं कर्मभ्योऽमृतत्वमानशुरिति न्यायभाष्योद्धृतश्रुत्या च विरोधाच्चेत्यलं बहुनेति कुरुक्षेत्रीयाः। अनवरतम्=निरन्तरम्, व्यवधानेनकृतस्यफलाजनकत्वात्। अनुचिन्तनमनुशीलनम्। निदिध्यासनं लक्षयति—विजातीयेति। विजातीयदेहादिपुल्यन्तजडपदार्थनिराकरणेन सजातीयाद्वितीयवस्तु विषयक प्रत्यय प्रवाहीकरणं निदिध्यासनमित्यर्थः। यदुक्तम्—'देहाभिमाने गलिते विज्ञातेपरमात्मनि। यत्र यत्र मनोयाति तत्र तत्र समाधयः॥ समाधि विभजते—सविकल्पकनिर्विकल्पकश्चेति। सम्प्रज्ञातोऽसम्प्रज्ञातश्चेत्यर्थः। तत्र=

सविकल्पको नाम ज्ञातृज्ञानादिविकल्पलयानपेक्षयाद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरवस्थानम् । तदा मृन्मयगजादि भानेऽपि मृद्भानवद्द्वैतभानेऽप्यद्वैतं वस्तु भासते । तदुक्तं ।

"दृशिस्वरूपं गगनोपमं परं
सकृद्विभातं त्वजमेकमक्षरम् ।
अलेपकं सर्वगतं यदद्वयं
तदेव चाहं सततं विमुक्तमोमिति" ॥

---

तयोर्मध्ये, ज्ञातृज्ञानज्ञेयरूपात्रिपुटीप्रलये हि नो इति पञ्चदश्युक्तेराह—ज्ञातृज्ञानज्ञेयत्रिपुटीविलयानपेक्षयाऽहं ब्रह्मास्मीत्येवं चित्तवृत्तेरवस्थानं सविकल्पकः । तदा=सविकल्पसमाध्यनुभवकाले, अद्वैतं वस्तुभासते इति, न हि सदतिरिक्तं किञ्चिदनुभूयते सद्रूपश्चात्मा ब्रह्मैवेति तर्केणापिसिद्धमद्वैतमितिकुरुक्षेत्रीयाः । विशिष्टमेवतदिति श्रीकण्ठरामानुजयोराग्रहः । अत्र दृष्टान्तमाह—मृन्मयेति । तदुक्तं—चूडामणौ भगवत्पादैरपि=मृदेव सत्यं परमार्थभूतम् ॥ तथा—मायामात्रमिदं द्वैतमद्वैतं परमार्थत" इति भावः । अस्माभिश्चात्रोच्यते—'द्वैतवादेनमेद्वयोनाद्वैतपक्षपातिता । परमार्थसदद्वैतं न द्वैतं किन्तु दृश्यते । खण्डने नैषधे चोक्तम्—पारमार्थिकमद्वैतमिति=' अद्वैततत्त्व इव सत्यतरेऽपि लोक इति । अत्राचार्यसम्मतिमाह—तदुक्तमिति—उपदेशसाहस्र्यां भगवत्पादैरितिशेषः । ओमितियत्परं ब्रह्म तदेवाहं मित्यनुषङ्गः । कीदृशं तदित्यत्राह—दृशिस्वरूपम्=साक्षिस्वरूपमित्यर्थः । तदुक्तं गीतायाम्—"उपद्रष्टानुमन्ताचेति । गगनोपमम्=गगनमाकाशस्तद्वन्निर्लेपस्वरूपम्, यथापुष्करपलाशेसलिलमेवं देहे आत्मेति भावः । सकृद्विभातम्=सर्वदैकरूपेण भासमानम्, अजम्=जन्मरहितम्, न जायते म्रियते वा कदाचिदिति भगवदुक्तेः । एकं=सजातीयविजातीय भेदशून्यम्, अक्षरम्=कूटस्थस्वरूपम्, "क्षरः सर्वाणिभूतानि कूटस्थोऽक्षर उच्यते, इति तस्यैवोक्तेः । अलेपकम्=लेपः संसारः तच्छून्यमित्यर्थः । 'असङ्गो ह्ययं पुरुष इति श्रुतेः । सर्वगतं=सर्वत्रव्याप्तम्, अद्वयम्=द्वितीयरहितम्, सततं विमुक्तम्=न कदाचिद्बद्ध इत्यर्थः । तथा च

निर्विकल्पकस्तु ज्ञातृज्ञानादिविकल्पलयापेक्षयाद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरतितरामेकीभावेनावस्थानम्। तदा तु जलाकाराकारितलवणानवभासेन जलमात्रावभासवद्-द्वितीयवस्त्वाकाराकारितचित्तवृत्त्यनवभासेनाद्वितीयवस्तुमात्रमवभासते। ततश्चास्य सुषुप्तेश्चाभेदशङ्का न भवति। उभयत्र वृत्त्यभाने समानेऽपि तत्सद्भावासद्भावमात्रेणानयोर्भेदोपपत्तेः ॥ ३० ॥

अस्याङ्गानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यान-समाधयः। तत्र "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः"।

---

भागवते "बद्धोमुक्त इति व्याख्या गुणतोमेनवस्तुतः ॥ निर्विकल्पकसमाधिमाह-निर्विकल्पकस्त्विति। तदाकाराकारितायाः=अखण्डाकाराकारितायाः, अतितरामत्यन्तमेकीभावेनावस्थानम्=निर्वातस्थलदीपवदिति भावः। तत्र दृष्टान्तमाह-तदा जलाकारेति। अनवभासेन=विस्पष्टानवभासनेन, दार्ष्टान्ते योजयति-अद्वितीयवस्त्विति। अस्य-निर्विकल्पकसमाधेः, अभेदशङ्का= एकत्वशङ्का, न भवति=तत्र हेतुमाह-उभयत्रेति। समाधिसुषुप्त्योरित्यर्थः। तत्सद्भावासद्भावमात्रेणेति। समाधावज्ञायमानवृत्तिसद्भावात्सुषुप्तौ वृत्त्यभावाच्चतयोर्भेदोपपत्तेः ॥ ३० ॥

अस्य=निर्विकल्पकसमाधेः, अङ्गानि=अन्तरङ्ग साधनानि योगसूत्रोक्तानि यमादीनीत्यर्थः। तत्र=यमाद्यष्टाङ्गेषु मध्ये, अहिंसादयः पञ्चयमपदवाच्या इत्यर्थः। वाङ्मनः कायैः परपीडावर्जनमहिंसा। अशुद्धमिति चेन्न शब्दादिति ब्रह्मसूत्रात्-याज्ञिकीहिंसा तु न दुष्यति तस्या वैधत्वात्। पापजनकतापेक्षया पुण्यजनकतायास्तत्र प्राबल्यादिति कुदृष्टेश्रीयाः। महाभाष्योक्त कूपखानकन्यायेन तद्दोषस्यपरिहरत्वाच्च यदाह पञ्चशिखः-'स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्श इति ॥ सत्यं यथार्थभाषणम्। विपक्षे च दोषः श्रूयते- 'समूलो वा एष परिशुष्यति योऽनृतमभिवदति ॥ अस्तेयं=परद्रव्यानपहरणम्,

"शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः"। करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकादीन्यासनानि। रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः। इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः। अद्वितीयवस्तुन्यन्तरिन्द्रियधारणं धारणा। तत्राद्वितीयवस्तुनि विच्छिद्य

---

'मागृधः कस्यस्विद्धनमिति श्रुतेः। ब्रह्मचर्यम्=उपस्थसंयमः, ऋतौ स्वभार्यागमनं वा। अपरिग्रहः=आपद्यपि छद्मना परद्रव्यास्वीकारः। नियमानाह—शौचेति। शौचं द्विविधं बाह्यमाभ्यन्तरं च मृज्जलाभ्यां बाह्यं शौचं मनः शुद्धिराभ्यन्तरं। तदुक्तं—'सबाह्याभ्यन्तरः शुचिरिति। सन्तोषः=यदृच्छालाभेनतुष्टिः, तपः=देवादिपूजनम्, कृच्छ्रादिवा स्वाध्यायः=वेदाध्ययनम्, ईश्वरप्रणिधानम्=ईश्वर भक्तिः, ईश्वरश्चयोगसूत्रोक्तः क्लेशाद्यपरामृष्टः शिवविष्णुब्रह्मरूपःसृष्टिस्थितिप्रलयकृत्परमात्मा सृष्ट्याद्युक्तेः सदृशसङ्कल्पलाभावोपि यत्रेदमुच्यते। "अनेकेश्वरवादो हि नातीवहृदयंगमः। ते चेत्सदृशसङ्कल्पाः कोर्थोबहुभिरीश्वरैः॥

अथ ध्यानसाधनानि आसनान्याह—

करचरणादीति। हस्तपादादीनां यः संस्थानविशेषस्तत्स्वरूपाणीत्यर्थः। तत्र चैलाजिन कुशोत्तरं बाह्यमासनम्। अस्योपयोगो गीतायामुक्तः—"उपविश्यासनेयुञ्ज्याद्योगमात्मविशुद्धय इति॥ पद्मस्वस्तिकादिशारीरमितिभेदः। "प्राणायामस्त्रिधाप्रोक्तः पूरकुम्भकरेचकैरितिस्मृतेराह—रेचकेति। श्वासप्रश्वासयोःप्रतिरोधः प्राणायाम, स्तत्रबाह्यवायोराचमनं श्वासः। कौष्ठ्यस्यवायोर्बहिर्निःसारणंप्रश्वासः। क्रमप्राप्तं प्रत्याहारं लक्षयति—इन्द्रियाणामिति। चक्षुरादीनां स्वस्वविषयेभ्यः प्रत्याहरणं=निवर्तनंप्रत्याहारः। वार्तिकेऽप्युक्तम्—संनियम्येन्द्रियग्राममित्यादिना, तच्चकठिनमेव यदुक्तम्—"कुरङ्गमातङ्गपतङ्गभृङ्ग मीनाहताः पञ्चभिरेवपञ्च। एकःप्रमादीसकथं न हन्यतेयः सेवतेपञ्चभिरेवपञ्च"॥ 'देशबन्धश्चित्तस्यधारणेतियोगसूत्रमनुसृत्यधारणां लक्षयति—अन्तरिन्द्रियधारणमिति। अति चंचलचित्तस्यस्थिरीकरणमित्यर्थः।

विच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहो ध्यानम्। समाधिस्तूक्तः सविकल्पक एव ॥ ३१ ॥

एवमस्याङ्गिनो निर्विकल्पकस्य लयविक्षेपकषायरसास्वादलक्षणाश्चत्वारो विघ्नाः सम्भवन्ति। लयस्तावदखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा। अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्यावलम्बनं विक्षेपः। लयविक्षेपाभावेऽपि चित्तवृत्ते रागादिवासनया स्तब्धीभावादखण्डवस्त्वनवलम्बनं कषायः। अखण्डवस्त्वनवलम्बनेनापि चित्तवृत्तेः सविकल्पकानन्दास्वादनं रसास्वादः। समाध्यारम्भसमये सविकल्पकानन्दास्वादनं वा ॥ ३२ ॥

---

अन्तरिन्द्रियनिग्रह इति वेदान्तपरिभाषाकारः। तत्र योगसूत्रद्वयम्—"अभ्यास वैराग्याभ्यां तन्निरोधः, "ईश्वरप्रणिधानाद्वा, ध्यानं लक्षयति—तत्रेति। अद्वितीयवस्तुनि=ईश्वरविषये, अन्तरिन्द्रियवृत्तिप्रवाहः=चित्तवृत्तिप्रवाहीकरणं ध्यानमित्यर्थः। "चेतसस्तु चितिमात्र शेषता-ध्यान मित्यभिवदन्ति वैदिका" इतिसंक्षेपशारीरकम्। 'प्रत्ययैकतानता ध्यानमितियोगसूत्रञ्च। समाधिस्तूक्तः=अतोनात्रकथ्यते। समाधिसद्भावे प्रमाणन्तु-"क्षणमात्रमृषिः तस्थौसुप्तमीनइवहृद इत्यादि। लयादि विघ्नान् विभज्यलक्षयति—लयस्तावदिति। विक्षेपंलक्षयति—अखण्डेति। कषायंलक्षयति।' लयविक्षेपेति। रागादिवासनया=अनेकजन्माभ्यस्तपुत्रादि प्रेमवासनानुरक्तंचित्तं श्रवणादिनाकिञ्चिद्दूरकमपि चैतन्य ग्रहण सामर्थ्याभावान्मध्यएव-स्तब्धंभवतीतिभावः। तं विद्याकर्मणीसमन्वारभेते पूर्वप्रज्ञाच, 'तदेवसक्तः सहकर्मणे'ति लिङ्गंमनोयत्रनिषिक्तमस्येति च श्रुतेः। रसास्वादं लक्षयति—अखण्डेति। बाह्यप्रपञ्च निवृत्तिजन्यानन्दस्य ब्रह्मानन्दत्वभ्रमेणास्वादनं रसास्वाद इत्यर्थः। अस्यैव लक्षणान्तर माह—समाध्यारम्भसमयइति। निर्विकल्पकसमाध्यारम्भकाले इत्यर्थः। सविकल्पकानन्दास्वादनं च=सविक-

अनेन विघ्नचतुष्टयेन विरहितं चित्तं निर्वातदीपवदचलं सदखण्डचैतन्यमात्रमवतिष्ठते यदा तदा निर्विकल्पकः समाधिरित्युच्यते। तदुक्तं।

"लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः।
सकषायं विजानीयाच्छमप्राप्तं न चालयेत्॥
नास्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेदिति" ॥

---

ल्पकानन्दत्यागासमर्थतया पुनस्तस्यैवास्वादनं रसास्वादइति सुबोधिनीकारः ॥ ३२ ॥

अनेन=अनुपदमुक्तेन, विघ्नचतुष्टयेन विरहितं=शून्यं, चित्तं=मनः, यदा निर्वातदीपवदचलं सदखण्डचैतन्य मात्रमवतिष्ठते=भवति, तदानिर्विकल्पकः समाधिर्जायतइत्यर्थः। समाधीयतेमनोऽस्मिन्निति व्युत्पत्तिः। उक्तञ्चभ्रद्रयामपि "निर्वातदीपवच्चित्तं समाधिरभिधीयते। श्रुतिश्चात्रभवति–'युञ्जतेमन उत युञ्जतेधियः, ततस्तुतंपश्यति निष्कलं ध्यायमान इति ॥

लयादिविघ्नसद्भावे तन्निवृत्तिप्रकारेच गौडपादाचार्यं सम्मतिमाह—तदुक्तमिति। गौडपादकारिकायामितिशेषः। निद्रालक्षणे 'लये'जातेसतितन्निवृत्यर्थं चित्तं=मनः, सम्बोधयेत्=प्राणायामादिनोत्थापयेत्, विक्षिप्तम्=विक्षेपयुक्तं चित्तं, शमयेत्=शान्तंकुर्यात्, सकषायम्=रागादिकषायसहितंमे चित्तमितिजानीयात्। ततद्वयत्नेनब्रह्मणि निवेशयेत्। शमप्राप्तं=रागादिवासनाक्षयसहितंचित्तं स्वस्थानान्नचालयेत्=तत्रैवस्थिरंकुर्यात्, रसम्=सविकल्पकरसं, नास्वादयेत्=नानुभवेत्, तत्रयुक्तिमाह–प्रज्ञयानिःसङ्गः=स्थिरप्रज्ञोभवेदित्यखण्डार्थः। अत्रभगवानपि वेदान्तसारभूतायांगीतायामाह—यथादीपइति। निवातस्थो वायुरहितेस्थाने स्थितो नेङ्गते=न विचलति न कम्पते, सोपमा=निर्विकल्पक समाधेरितिभावः ॥ ३३ ॥

एतत्समाधिद्वयंजीवन्मुक्तस्यैव सम्भवति नान्यस्येत्यभिप्रेत्य अत्रभगवान् ग्रन्थकारो जीवन्मुक्त लक्षणमाह–जीवन्मुक्तोनामेत्यादिनाब्रह्मनिष्ठइत्यन्तेन,

अथ जीवन्मुक्तलक्षणमुच्यते। जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृतेऽज्ञानतत्कार्यसञ्चितकर्मसंशयविपर्ययादीनामपि बाधितत्वादखिलबन्धरहितो ब्रह्मनिष्ठः।

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" ॥

इत्यादिश्रुतेः ॥ ३४ ॥

---

अत्राखिलबन्धरहितो ब्रह्मनिष्ठो जीवन्मुक्त इति तस्य लक्षणम्। ब्रह्मनिष्ठत्वं च—"वेदान्तवेद्यब्रह्मात्मनावस्थितत्वमिति मनोरञ्जनीकारः। सकलबन्धराहित्ये हेतुमाह—स्वस्वरूपेति। स्वं जीवः तस्य स्वरूपमखण्डब्रह्मतज्ज्ञानेन तदज्ञानबाधनद्वारा—ब्रह्मविषयकाज्ञानबाधनद्वारा, अखण्डब्रह्मणि साक्षात्कृते=ज्ञाते सतीत्यर्थः। अज्ञानतत्कार्येति। अज्ञानमुक्तलक्षणम्। तत्कार्यं=अज्ञानकार्यम्, स्थूलसूक्ष्मप्रपञ्चद्वयम्। सञ्चितकर्म=अनारब्धफलम् उद्बुद्धवृत्तिकं प्रारब्धमनुद्बुद्धवृत्तिकं चसंचितंतच्च अपि द्विविधं सुकृतं दुष्कृतंचतथाचश्रुतिः 'तस्य पुत्रादायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति। संशयोदेहाद्यतिरिक्त आत्मा भवति न वा, आत्मज्ञानं मुक्तिसाधनं न वा, जीवस्य परमात्मना सहैक्यं संभवति नवेत्यादिः। सच संशयो ब्रह्मसूत्र शाङ्करभाष्ये प्रथमाध्याये निराकृतः। संशययुक्तस्य भगवताप्युक्तं बहुकष्टं—'संसयात्मा विनश्यति। न सुखं संशयात्मनः॥ विपर्ययः=मिथ्याज्ञानम्, देहादिष्वात्माभिमानादिः। तन्निवर्तकमात्मज्ञानमेव—'निर्धेव तु निर्धारणादिति ब्रह्मसूत्रात्। एतेषांबाधितत्वान्मुक्त इत्यर्थः। अत्र मुण्डकश्रुतिं प्रमाणयति—भिद्यत इति। अस्य—जीवस्य, हृदयग्रन्थिः=अहंकारः, सर्वसंशयाः=दृष्टादृष्टार्थविषयाः, कर्माणि=प्रारब्धातिरिक्तानि संचितानि क्रियमाणानि च क्षीयन्ते=नश्यन्ति, तथाच ब्रह्मसूत्रम्—"तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ कदा-तस्मिन्निःप्रपञ्चब्रह्मात्मनि दृष्टे=साक्षात्कृते सति, कीदृशे परावरे=सर्वात्मके ॥ ३४ ॥

अयं तु व्युत्थानसमये मांसशोणितमूत्रपुरीषादिभाजनेन शरीरेणान्ध्यमान्द्यापटुत्वादिभाजनेनेन्द्रियग्रामेणाशनापिपासाशोकमोहादिभाजनेनान्तःकरणेन च पूर्वपूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानाविरुद्धारब्धफलानि च पश्यन्नपि बाधितत्वात्परमार्थतो न पश्यति। यथेन्द्रजालमिति ज्ञानवांस्तदिन्द्रजालं पश्यन्नपि परमार्थमिदमिति न पश्यति। "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव" इत्यादिश्रुतेः। उक्तं च।

"सुषुप्तवज्जाग्रति यो न पश्यति
द्वयं च पश्यन्नपि चाद्वयत्वतः।
तथा च कुर्वन्नपि निष्क्रियश्च यः
स आत्मविन्नान्य इतीह निश्चय" इति ॥ ३५ ॥

---

अयन्तु=जीवन्मुक्तस्त्वित्यर्थः। व्युत्थानसमये=समाधेः सकाशादिति शेषः। मांसशोणितेति। मांसं प्रसिद्धम्। शोणितं रुधिरम्। स्पष्टमन्यत्। अनेन स्थूलदेहस्य निन्द्यत्वमुक्तम्। उक्तमन्यत्रापि—"सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः। शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ आन्ध्यमन्धत्वम्, मान्द्यं=मन्दता, अपटुत्वमपाटवम्, इन्द्रियग्रामेण=चक्षुरादीन्द्रियसमूहेन, अशना=बुभुक्षा, स्पष्टमन्यत्। अन्तःकरणेन=मनसा, ज्ञानाविरुद्धेति। ज्ञानाविरुद्धानि च तान्यारब्धफलानि चेति समास इत्यापद्देवः। परमार्थतः=स्वदृष्टया, न पश्यति बाधितत्वात्=ब्रह्मसाक्षात्कारेणेति शेषः। दृष्टान्तमाह—यथेन्द्रजालमिति। इन्द्रजालमायालक्षणं पंचदश्यां द्रष्टव्यम्। जीवन्मुक्तो देहादिभिर्व्यवहरन्निवदृश्यमानोऽपि परमार्थतो न व्यवहरतीति परमार्थः। अत्र ब्रह्मविद्विषयां श्रुतिं पठति—सचक्षुरचक्षुरिवेति। चक्षुरादिमानपि जीवन्मुक्तः चक्षुरादिहीन इव भवतीत्यर्थः। अत्रार्थे शंकराचार्यवचनं प्रमाणयति-उक्तं चेति। उपदेशसाहस्र्यामिति शेषः। यो जाग्रति=जाग्रदवस्थायाम्, द्वयं=द्वैतं, पश्यन्नपि, सुषुप्तवत्-विशेषतो न पश्यति, स आत्मवित्। तत्रहेतुः-अद्वयत्वतः=द्वयस्य बाधितत्वादित्यर्थः। अत्र भगवान्

अस्य ज्ञानात्पूर्वं विद्यमानानामेवाहारविहारादीनामनुवृत्तिवच्छुभवासनानामेवानुवृत्तिर्भवति शुभाशुभयोरौदासीन्यं वा। तदुक्तं।

'बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे" इति॥
"ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः" इति॥ ३६॥

---

वशिष्ठोऽप्याह योगवासिष्ठे—"सुषुप्तवद्यश्चरति स मुक्त इति कथ्यते॥ सांख्यसारेऽप्युक्तम्—"सुखं सुषुप्तिः परमादुःखं विषयवेदनम्। सुखदुःखसमासोऽयं किमन्यैर्बहुभाषितैः॥ ३५॥

जीवन्मुक्तस्य नाशुभे प्रवृत्तिरित्याह—अस्येति। जीवन्मुक्तस्येत्यर्थः। शुभवासनानामेवेति। अशुभवासनानां पूर्वमेव निवृत्तत्वादिति भावः। शुभाशुभयोरौदासीन्यं वेति: औदासीन्यमुपेक्षा, तत्त्वज्ञानस्य तथैव स्वभाव इति भावः। यदैव तु निवर्तन्ते येऽस्यकामा हृदि स्थिताः। अथमर्त्योऽमृतोभवत्यत्र ब्रह्मसमश्नुते॥ इतिश्रुतेर्जीवन्मुक्तिर्नापलपितुं शक्येतिचित्सुख्युपसंहारः अत्र सुरेश्वराचार्यवचनमुदाहरति—तदुक्तमिति। नैष्कर्म्यसिद्धाविति शेषः। बुद्धमद्वैतस्य सतत्त्वं=याथात्म्यं येन स तस्य, पञ्चदश्यान्तु—बुद्धाद्वैतस्वतत्त्वस्येति पाठः। बुद्धमद्वैतस्वतत्त्वं=मद्वैतस्वरूपं ब्रह्म येन स तस्येति तट्टीकाकारो रामकृष्णपण्डितः। अस्याद्वैतवादस्य पुष्टिः शंकरभगवत्पादग्रन्थैर्भवति—यत्रेदमुच्यतेऽस्माभिः—"अद्वैतबोधेन विना तु मुक्तिर्न जायते जन्मशतान्तरेऽपि। स शाङ्करग्रन्थविलोकनेन सद्यो हृदि द्योतत एव पुंसः॥ तदनुगाम्यद्वैतसिद्धि न्यायमकरन्दचित्सुखीखण्डखण्डनादिभिश्च। ज्ञानिनो यथेष्टाचरणं यदि स्यात्तर्हि अशुचिभक्षणादिकमपि स्यात्। तथा सति शुनां तत्त्वदृशां च को भेदः। तस्मान्जीवन्मुक्तस्य ज्ञानिनो यथेष्टाचरणं नास्तीतितात्पर्यम्। जीवन्मुक्तस्य ब्रह्मज्ञानाभिमानो नास्तीत्यत्रापि बृहदारण्यकसम्मतिमाह—ब्रह्मवित्त्वमपीति। ब्रह्मविदहमस्मीत्यभिमानं त्यक्त्वा यो वेद स आत्मविन्नान्य इति भावः।

तदानीममानित्वादीनि ज्ञानसाधनान्यद्वेष्टृत्वादयः सद्गुणाश्चालङ्कारवदनुवर्त्तन्ते । तदुक्तं ।

"उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः ।
अयत्नतो भवन्त्यस्य न तु साधनरूपिण" इति ॥ ३७ ॥

किंबहुनायं देहयात्रामात्रार्थमिच्छानिच्छापरेच्छाप्रापितानि सुखदुःखलक्षणान्यारब्धफलान्यनुभवन्नन्तःकरणाभासादीना-

---

तदुक्तंमहात्मभिरपिः—प्रतिष्ठाशौकरीविष्ठा गौरवं घोररौरवम् । अभिमानं सुरापानं त्रयं त्यक्त्वा सुखी भवेत् ॥ ३६ ॥

तदानीम्=जीवन्मुक्तावस्थायामित्यर्थः । अमानित्वादीनीति । अमानित्वम-नहङ्कृतत्वम् । गर्वरहितत्वमिति यावत् । मूर्खस्य पञ्चचिह्नानि गर्वो दुर्वचनं तथा । क्रोधश्च हठवादश्च परवाक्येष्वनादरः ॥ इत्युक्तदुर्वचनाभावत्वादिकमादिपदात । अद्वेष्टृत्वादय इति । अद्वेष्टृत्वं=द्वेषरहितत्वम् । आदिपदेन निर्ममत्वादिर्गृह्यते । तथाचखाद्यखण्डने—"क्वममत्वं मुमुक्षूणां तथाहि मिथिलाधिपः । आहेदं मिथिलादाहे न मे किंचन दह्यते ॥ अलङ्कारवदनुवर्त्तन्त इति । ज्ञानस्य सिद्धत्वादितिभावः । अत्रसुरेश्वरसम्मतिमाह—तदुक्तमिति । नैष्कर्म्यसिद्धाविति शेषः । अस्य=जीवन्मुक्तस्य, अद्वेष्टृत्वादयो गुणा अयत्नत =स्वतएव भवन्ति । नतु साधनरूपाः । तत्र हेतुमाह—उत्पन्नात्मावबोधस्येति । उत्पन्न आत्मावबोधः=ब्रह्मात्मैकत्वनिश्चयो यस्य तस्येत्यर्थः । ब्रह्मात्मैकत्वेज्ञाते ब्रह्मसूत्रशांकरभाष्याचार्यैः—सर्वकर्तव्यताहानिःकृतकृत्यताच भवति । उक्तंच वेदान्तमुक्तावल्याम्—प्रकाशानन्दयतिभिः "कुलं पवित्रं जननीकृतार्था वसुन्धरापुण्यवतीच तेन । अपारसच्चित्सुखसागरेऽस्मिन् लीनं परेब्रह्मणि यस्य चेतः ॥

जीवन्मुक्तिसाधनानि—तत्त्वज्ञानमनोनाशवासनाक्षयादीनि जीवन्मुक्तिविवेकप्रदर्शितानि॥ ३७॥सम्प्रति जीवन्मुक्तस्य परममुक्तिंदर्शयति—किंबहुनेति । अनल्पजल्पनेन किमित्यर्थः । बहुशास्त्रकथाकन्थारोमन्थेनवृथैव सर्वसारं प्रदर्श्यते इति भावः । परममुक्तिर्द्विविधासद्योमुक्तिः क्रममुक्तिश्च—सद्योमुक्तिर्ज्ञानिनः ।

मवभासकः संस्तदवसाने प्रत्यगानन्दपरब्रह्मणि प्राणे लीने सत्यज्ञानतत्कार्यसंस्काराणामपि विनाशात्परमकैवल्यमानन्दैकरसमखिलभेदप्रतिभासरहितमखण्डब्रह्मावतिष्ठते । "न तस्य प्राणा उत्क्रामन्ति" "अत्रैव समवलीयन्ते" "विमुक्तश्च विमुच्यते" इत्यादिश्रुतेः ॥ ३८ ॥)

इति श्रीमत्परमहंसपरिव्राजकाचार्यसदानन्दविरचितो
वेदान्तसारः समाप्तः ॥

---

काशीकुरुक्षेत्रादिमुक्तिः क्रममुक्तिः। अधिकं गादाधरीये मुक्तिवादे द्रष्टव्यम्। अयम्=जीवन्मुक्तः, देहयात्रा=देहस्थितिः, तन्मात्रार्थं=नत्विन्द्रियप्रीत्यर्थमिति मनोरञ्जनीकारः। "इच्छानिच्छापरेच्छाच प्रारब्धं त्रिविधं स्मृतमिति पंचदश्युक्तेराह—स्वेच्छया अनिच्छया परेच्छया प्रापितानि सुखदुःखलक्षणानि=सुखदुःखसाधनानि, तत्र सर्वेषामनुकूलवेदनीयं सुखं प्रतिकूलवेदनीयं च दुःखम्। आरब्धफलानि=भोग्यानि, अनुभवन्=असंगततया भुञ्जानः, कथमित्युच्यते—अन्तःकरणाभासादीनां=विषयाकारवृत्तीनाम्, साक्षित्वेनावभासकः सन्, तदवसाने=प्रारब्धफलभोगावसाने जाते, आश्रयाभावात्प्राणेब्रह्मणि-लीने सति=वर्तमानशरीरपातेसतीत्यर्थः। अज्ञानतत्कार्यं संस्काराणामपि-विनाशादिति। पूर्वसिद्धज्ञानेनैवप्रारब्धकर्माक्षिप्ताज्ञानतत्कार्यतत्संस्काराणां विनाशादित्यर्थः। तथाचोक्तं संक्षेपशारीरके—"सम्यग्ज्ञानविभावसुः सकलमेवाज्ञानतत्संभवं संसारस्य विनष्टितेनाविदुषः सद्योविमुक्तिर्ध्रुवा ॥ अत्राधिकं वैमलानन्दे वेदान्तसारसंग्रहे द्रष्टव्यम्। 'यस्मिन्देहे दृढं ज्ञानमपरोक्षं विजायते। तद्देहपातपर्यन्तमेवसंसारदर्शनमिति स्कन्दोक्तेराह—परमकैवल्यमिति। संचितकर्मणां ज्ञानेनदाहात्क्रियमाणैश्चाश्लेषात् पुनर्देहान्तरहेत्वभावादखण्डैकरसब्रह्मानन्दात्मनाऽवतिष्ठते इति तदर्थः। अत्र बृहदारण्यकश्रुतिं प्रमाणयति—न तस्येति। तस्य=ज्ञानिनः प्राणानोत्क्रामन्ति=कण्ठान्न निर्गच्छन्ति, किन्तु अत्रैव=प्रत्यगात्मन्येव, समवलीयन्ते=तप्तायःतीपाम्बुल्लयं प्राप्नुवन्तीत्यर्थः। विमुक्तश्च=वीतरागत्वाज् जीवन्नेवमुक्तरूपो-

ऽधीत्यर्थः। विमुच्यते=वर्तमानदेहपातेपरममुक्तोभवति, ब्रह्मभावलक्षणं मोक्षं प्राप्नोतीति काठकश्रुत्याशयः। नसपुनरावर्तत इत्यादिश्रुते र्मोक्षंखल्वधिगतो न पुनरावर्ततेसंसारवर्त्मसु–"वीतरागजन्मादर्शनादितिन्यायसूत्रात्। अनावृत्तिः शब्दादिति ब्रह्मसूत्रात्। न्यायादिषड्दर्शनानां पर्यन्तैक्येऽपि मध्येमध्ये सर्वेष्वन्येषु श्रुतिविरोधदर्शनाद्वेदान्तशास्त्रमेव यथार्थमुत्प्रेक्ष्यते। यथा च विचारितं खण्डनकारादिभिः–'एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित्। न भवेद्धीरवीरस्य भंगः शास्त्रार्थसंगरे॥ तावद्गर्जन्ति शास्त्राणि जम्बुका विपिने यथा। न गर्जति महाशक्तिर्यावद्वेदान्तकेशरी॥ अद्वैतसिद्धेः सिद्धिव्याख्यायां "बलिनिवेदनयेजयश्रीरित्युदयनाचार्यकृतात्मतत्त्वविवेकपद्यं-बलिनि=सर्वदर्शनेभ्यो बलवति, वेदनये=वेदान्तदर्शने, जयश्रीर्जयोत्कर्षपराकाष्ठेत्येवं व्याचक्षाणा "वेदान्तदर्शनमेव सर्वदर्शनेषु दर्शनीयतममिति मधुसूदनीय सिद्धान्तबिन्दो रायपदव्याख्यायां च गौडब्रह्मानन्दस्वामिन आहुरिति शम्॥ ३८॥

निजायाः सहधर्मिण्या भक्तिदेव्या अधीष्टतः।
षड्ग्रहग्रहभूवर्षे ग्रन्थोऽयं व्याकृतो मया॥ १॥
वेदान्तसारे याष्टीका अनेकाः पण्डितैः कृताः।
पाण्डित्ययुक्तास्ताः छात्रैर्न सुबोधा इति श्रमः॥ २॥
मयाधीत्य महाभाष्यं कौमुदींशिखरं तथा।
निरुक्तं काव्यसाहित्ये न्यायं वेदान्तमेव च॥ ३॥
न्यायमुक्तावलीटीकावृत्तिश्च न्यायदर्शने।
साहित्यविन्दुर्विदधे दुर्गाभ्युदयनाटकम्॥ ४॥
सिद्धान्तकौमुद्यां टीका महाभाष्यनिरुक्तयोः।
वेदान्तसारे चैतेनप्रीयतां पार्वतीपतिः॥ ५॥

# प्रश्नपत्र संग्रहः ।

## सन् १९३१

## दर्शनमध्यमायाम्

### वेदान्तसारे प्रश्नाः—

(१) अध्यारोपापवादयोः स्वरूपमुपवर्ण्य ताभ्यां तत्त्वंपदार्थयोः शोधन प्रकार उपपाद्यताम् । निर्विकल्पक सविकल्पकयोः समाध्योः किं लक्षणम् ? किंनाम वृत्तिव्याप्यत्वम् ? किंवा फलव्याप्यत्वम् ?—९

(२) लयविक्षेप कषाय रसास्वादानां स्वरूपंविवृणुत । कानामावरण शक्तिः, कावा विक्षेपशक्तिः ? प्राज्ञस्य किंस्वरूपम् ? सूक्ष्मशरीराव-यवके ? कर्मेन्द्रियाणां कस्मादुत्पत्तिः पञ्चानामपि वायूनां किं कार्यम् ? —८

(३) सामानाधिकरण्यं च विशेषण विशेष्यता ।
लक्ष्यलक्षण सम्बन्धः पदार्थप्रत्यगात्मनाम् ॥
बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतोघटम् ।
तत्राज्ञानं धिया नश्येदाभासेनघटः स्फुरेत् ॥
अनयोः श्लोकयोः सन्दर्भप्रदर्शनपुरः सरमर्थो वर्ण्यताम् । किंनाम मननम् ? किंनिदिध्यासनम् ? यमनियमप्रत्याहाराणां स्वरूपं विवृणुत । —८

## सन् १९३२

## दर्शनमध्यमायाम्

### वेदान्तसारे प्रश्नाः—

(१) प्रत्यगात्मविषये प्रतिवादिनां विप्रतिपत्तिवाक्यानि सयुक्ति प्रमा-णानि दर्शयित्वा तत्खण्डनपुरः सरं स्वमतं विवेचनीयम् । —१०

(२) षड्भिरपि लिङ्गैरुपनिषदां तात्पर्यं मद्वितीये ब्रह्मणि प्रख्याप्य जीवन्मुक्त लक्षणं ब्रूत ? —१०

सन् १९३३

## दर्शनमध्यमायाम्

### वेदान्तसारे प्रश्नाः—

( १ ) सप्रमाणलक्षण निर्देशपूर्वक मज्ञानस्वरूपं वेदान्तसारोक्तदिशा विस्पष्टतया प्रतिपाद्यताम् । —८

( २ ) फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् । ब्रह्मण्य ज्ञाननाशाय वृत्तिव्याप्ति रपेक्षिता ॥ केनप्रसङ्गेन वेदान्तसारे समुद्धृतोऽयं श्लोकः ? अस्य श्लोकस्य तात्पर्यं सोदाहरणोपन्यासं वैशद्येन प्रतिपादनीयम् । —१०

( ३ ) वेदान्तसार दर्शित दिशा सलक्षणप्रमाणोपन्य सं जीवन्मुक्त स्वरूपं विचार्य निर्णीयताम् । —७

सन् १९३४

## दर्शनमध्यमायाम्

### वेदान्तसारे प्रश्नाः—

(१) घनच्छन्न दृष्टिर्घनच्छन्नमर्कं यथामन्यते निष्प्रभं चातिमूढः ।
तथाबद्धवद्भातियो मूढदृष्टेः सनित्योपलब्धिस्वरूपोऽहमात्मा ॥
केनाभिप्रायेण श्लोकोऽयमुद्धृतः ? सोपक्रमं व्याख्यायताम् —१०

( २ ) अत्र ग्रन्थे जीवेश्वरयोः परस्परभेदनिर्देशपराः शब्दाः सन्ति न वा ? सन्ति चेत्तेषामुल्लेखपूर्वकं व्याख्यानं क्रियताम् । जीवन्मुक्तस्य किंलक्षणम् ६

( ३ ) समाधिः कतिविधः ? तस्यभेद निर्देशपुरःसर मनुगतं लक्षणं लेख्यम् ९

१९३६

# पुराणेतिहासमध्यमपरीक्षायाम् ।

## ३ वर्षे २ पत्रम् ।

सांख्यकारिकायां वेदान्तसारे च प्रश्नाः ।

१ पुरुषसाधकयुक्तीः सकारिकोपन्यासं प्रदर्श्य इमे आर्ये व्याख्येये--

जननमरणकरणानां प्रतिनियमाद् युगपत्प्रवृत्तेश्च ॥
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ।। १ ॥
तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ॥
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥ २ ॥

२ सूक्ष्मशरीरे प्रमाणान्युपन्यस्य सांख्यनये इन्द्रियाणां किमुपादानकत्वमिति सबाधकपरिहारं समाधाय च—

पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।
प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥

इत्यार्या व्याख्येया ।

३ न विनाभावैर्लिङ्गं न विना लिङ्गेने"त्यादिका कारिका तथा "तस्मान्न बध्यते नापि मुच्यते न संसरति" इत्यादिका च चन्द्रिकाक्षराण्यनुसरद्भिर्व्याख्येये ८

४ सूक्ष्मशरीरस्य स्थूलभूतानां चोत्पत्तिं वेदान्तमतेन व्याख्याय तत्र सांख्यसिद्धान्तात् करिमश्चंशे कियान् भेद इति सप्रमाणं निर्दिशत । ... १०

५ यन्मनसा न मनुते" "मनसैवानुद्रष्टव्यमि"ति श्रुत्योः विरोधं परिहरद्भिः—

बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥

इति पद्यं व्याख्येयम् ... १०

१९३७

# पुराणेतिहासमध्यमपरीक्षायाम् ।

## ३ वर्षे २ पत्रम् ।

सांख्यकारिकासु वेदान्तसारे च प्रश्नाः—

( १ ) व्यक्ताव्यक्तयोः साधर्म्यं कारिकानिर्देशपूर्वकं प्रदर्श्य प्रधानसाधनयुक्तयः कारिकानिर्देशपूर्वकं प्रदर्शनीयाः ।

(२)(क) सांख्यसिद्धान्तानुसारेण पुरुषस्यैकत्वमनेकत्वं वा ? (ख) कर्तृत्वं कुत्र वर्तते—पुरुषे, गुणेषु वा ? (ग) निष्क्रियपुरुषेण सहाचिद्रूपायाः प्रकृतेराद्यः संयोगः कथं जायते ? सर्वमेतत् स्वसिद्धान्तानुगुणाभिर्युक्तिभिः परिष्कृत्य निरूप्यताम् ।

( ३ ) अन्तःकरणं त्रिविधं दशधाबाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥

इत्यार्यां स्वसंस्कृतेन व्याख्याय त्रयोदश करणेषु केषां प्रधानत्वं केषां च गुणत्वमिति सप्रमाणं लेख्यम् ।

( ४ ) भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥

इत्यार्यां व्याख्याय काः कति च सिद्धयः तत्प्रतिबन्धकाश्च के इति समाधेयम् ।

( ५ ) अज्ञानस्य शक्तिद्वयं सप्रयोजनं सप्रमाणं च निरूप्य, आकाशादि भूतपञ्चकस्य सूक्ष्मशरीरस्य चोत्पत्तिं तदवयवविभागसहितां व्याख्यात । के तावत् कोशास्तदभिमानिनो जीवाश्च के ? ।

( ६ ) प्रत्यगात्मनि अनात्मनामारोपं सप्रकारं सोदाहरणं सविभागश्च व्याख्याय युक्तिभिः पुत्रादीनामनात्मत्वं स्थापनीयम् ।

( ७ ) श्रवण—मनन—निदिध्यासन—समाधीनां स्वरूपाभिधानपूर्वकं जीवन्मुक्तस्वरूपमभिधाय—बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशां चैव को भेदोऽशुचि भक्षणे ॥
इति कारिका सप्रसङ्गनिर्देशं व्याख्येया ।

सूचना—अत्र आदितश्चतुर्षु त्रयः, अन्ते त्रिषु द्वौ यथारुचि पञ्चैव प्रश्नाः समाधेयाः । सर्वे प्रश्नाः समानाङ्काः ।

१९३८

# पुराणेतिहासमध्यमपरीक्षायाम् ।

## ३ वर्षे २ पत्रम् ।

चन्द्रिकासहितसांख्यकारिकासु, वेदान्तसारे च प्रश्नाः ।

(१) प्रकृत्यादिप्रत्यक्षप्रतिबन्धकान् दोषान् कारिकोक्तान् सविवरणं निर्दिश्य–
हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥
इत्यार्या चन्द्रिकोक्तरीत्या व्याख्येया । १०

(२) प्रधानसाधकहेतुभिरनुमानस्वरूपनिर्देशपूर्वकं प्रधानं साधयित्वा, पुरुषसाधकहेतुभिः पुरुषं प्रमाणयता पुरुषबहुत्वं साधनीयम् । १

(३) सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।
भूतादेस्तन्मात्रस्स तामसस्तैजसादुभयम् ॥
उभयात्मकमत्र मनः संकल्पकमिन्द्रियञ्च साधर्म्यात् ।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥
इति कारिकाद्वयं चन्द्रिकामार्गेण स्वसंस्कृतेन व्याख्येयम् । १०

(४) साधनचतुष्टयोपन्यासपूर्वकं वेदान्तस्यानुबन्धचतुष्टयं निरूप्य अध्यारोपापवादपदार्थौ सोदाहरणं निरूपणीयौ । १०

(५) पञ्चकोशविवेचनपूर्वकमीश्वरप्राज्ञहिरण्यगर्भतैजसविश्ववैश्वानराणां स्वरू[illegible]धाय तत्र प्रमाणानि च निर्दिश्य एषां व्यष्टिसमष्टिता सलौकिकोदाहरणं व्याख्येया । १०

१९३९

# पुराणेतिहासमध्यमपरीक्षायाम् ।

## ३ वर्षे २ पत्रम् ।

चन्द्रिकाटीकोपेतसांख्यकारिकासु, वेदान्तसारे च प्रश्नाः ।

(१) असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम् ॥
चन्द्रिकारीत्या सुस्पष्टीकृत्य व्याख्यायताम् ? । ...१०

(२) लिङ्गनाम किन्तावत् ? तस्यास्तित्वे च किं मानम् ? तत् कथं संसरति ? तत्र हेतुश्च कः ? मूलकारिकामुदाहृत्य व्याख्याय च विशदीक्रियतां तदाशयः ? ...१०

(३) (क) वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥
(ख) प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥

सप्रकरणावतरणं सतात्पर्य्यप्रदर्शनञ्च टीकाकाराभिप्रायानुसारं व्याख्यायतामिदं कारिकायुगलम् ।

(४) कोऽयम् "आत्मा" इति नाम पदार्थः ? स च कस्य कस्य कीदृशोऽभिमतः ? प्रतिवादिनाम्प्रत्येकं मतं प्रदर्श्य, यथाशास्त्रं निराकृत्य च, प्रमाणोपपत्तिभिर्वेदान्ताभिमतात्मतत्त्वं निरूप्यताम्? ।

(५) (क) "तरति शोकमात्मविदितिश्रुतेः" ।
"ब्रह्मविद् ब्रह्मैव भवतीतिश्रुतेश्च" ॥
(ख) "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादिश्रुतेः ।

कुत्र किमर्थं चोक्तमिदं केन प्रसङ्गेन ? अस्य तात्पर्य्यञ्च किम् ? सुस्पष्टीकृत्य प्रतिपाद्यताम् ?

१९४०

## पुराणेतिहासमध्यमपरीक्षायाम् ।

### ३ वर्षे २ पत्रम्

( केवल ) वेदान्तसारे प्रश्नाः

(१) भूतानां पञ्चीकरणप्रक्रियां निर्दिश्य, पञ्चकोशान् व्याख्याय च, तदभिमानिनां जीवानां समष्टिव्यष्टिभेदभिन्नानां स्वरूपनिर्देशपूर्वकमभेदप्रकारो ग्रन्थोक्तः प्रदर्शनीयः ।

बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥ १ ॥

उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः ।
अयत्नतो भवन्त्यस्य न तु साधनरूपिणः ॥ २ ॥

लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ।
सकषायं विजानीयाच्छमप्राप्तं न चालयेत् ॥ ३ ॥

इमे श्लोकाः सङ्गतिनिर्देशपूर्वकं व्याख्येयाः ।

# मध्यसिद्धान्तकौमुदी

## बालमनोरमा नामक सरल टीका सहित

### टीकाकार—श्रीगुरुप्रसादशास्त्री,

व्याकरणाचार्य, न्यायाचार्य, दर्शनाचार्य ।

काशी गवर्न्मेन्ट-संस्कृत-कालेज की मध्यमपरीक्षाओं में तथा लाहोर आदि की संस्कृत-परीक्षाओं में भी मध्यकौमुदी पाठ्य रूप से नियत है ।

परन्तु इस मध्यकौमुदी की टीका अभी तक कहीं भी नहीं छपी थी इससे परीक्षार्थी छात्रों को विशेष कष्ट होता था । छात्रों के इस कष्ट को देखकर हमनें काशी के सुप्रसिद्ध विद्वान श्रीगुरुप्रसादशास्त्री द्वारा सङ्कलित बालमनोरमा टीका के साथ मध्यकौमुदी को छापना प्रारम्भ किया है ।

यह बालमनोरमा टीका बहुत ही सरल है, अतः इसके आधार पर मध्यकौमुदी की कठिन पंक्तियों को छात्रवर्ग बड़ी सरलता से समझ सकेंगे ।

सिद्धान्तकौमुदी की बालमनोरमा टीका सरलता के लिये प्रसिद्ध ही है, उसीके आधार पर मध्यकौमुदी की यह बालमनोरमा टीका बनाई गई है, अतः यह भी बहुत सरल बनी है ।

**हमारी मध्यकौमुदी की विशेष[illegible]**

आज तक की छपी हुई सभी मध्य[illegible] पुस्तकों में मूल के पाठों में बड़ी गड़बड़ी है । क्योंकि अनेकों सूत्र और पंक्तियां तथा आवश्यक पाठ व श्लोक इन छपी हुई पुस्तकों में नहीं हैं । परन्तु हमने लिखित प्राचीन पुस्तकों के आधार पर संशोधन कर उक्त सभी त्रुटियां दूर कर दी हैं ।

अतएव शुद्ध पाठ, बढ़िया टीका, सुन्दर मनमोहक छपाई, चिकना और मोटा कागज, बढ़िया जिल्द, ये सभी बातें इस बालमनोरमा टीका सहित हमारी मध्यकौमुदी में आपको मिलेंगी । अतः आज ही इस मध्यकौमुदी को शीघ्र मँगाइए । पृष्ठ ५२५ मूल्य १॥)

कमीशन काटकर १।)

हमारे खास ग्राहकों से १=)

**निवेदक—भार्गव पुस्तकालय, गायघाट, बनारस ।**

